# YOGATANTRA-GRANTHAMALA

*Vol. II*


**General Editor**

Badari nath Shukla

Director

Varanaseya Sanskrit Vishvavidyalaya,

Varanasi.





# LUPTĀGAMASAṄGRAHA

[ **Part I** ]

Collected & Edited

by


M.M. Pt. GOPINATH KAVIRAJA

Head of the Dept. of Yogatantra

Varanaseya Sanskrit Vishvavidyalaya, Varanasi



VARANASI

**1970**

# योगतन्त्र-ग्रन्थमाला

(२)

प्रधानसम्पादकः

**बदरीनाथशुक्लः**

सञ्चालकः

अनुसन्धानसंस्थानम्

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

# लुप्तागमसंग्रहः

[ प्रथमो भागः ]

सङ्कलयिता सम्पादकश्च

## म०म०प० गोपीनाथकविराजमहोदयः

योगतन्त्रविभागाध्यक्षः

वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी ।

वाराणस्याम्

१८९२ तमे शकाब्दे



# INTRODUCTION

Years ago when I was making a special study of Tantrik literature in its sources I used to be struck from time to time with the remarkable depth of wisdom and clarity of insight in the more or less obsolete Agama works quoted in the later literature. Out of sheer curiosity I began to make for personal use a systematic collection of these loose fragments of ancient texts. In course of time this developed into a pretty good collection which seemed to be worthy of publication. The process of collecting the fragments is still in progress. But it has been thought wise to bring out without further delay as much material as is ready for the press and not to wait till the collecting process is completed.

These fragments are culled from a variety of sources and even as they are in their whole or mutilated form they have a value of their own in building up the fabric of a half-forgotten or mutilated spiritual culture of great eminence. Many of these fragments are distinctly very old and some others which are not very old but yet retain intact the implications of the ancient traditions.

The present compilation which consists of extracts from nearly 221 works ( and authors ) is based on quotations from 16 works. The original source works from which the fragments have been collected are varied, including Tantra Texts, old commentaries, Stotras, Prakaranas and works of other denominations.

2 A, Sigra,
Varanasi.

**Gopi Nath Kaviraj**
31-3-70

# आद्यमावेदनम्

निगमागमा एव सम्पूर्णाया भारतीयायाः संस्कृतेः समग्रस्य भारतीयस्य वाङ्मयस्य च मूलम्। तत्र निगमो वेदः, आगमस्तन्त्रम्। वेदा ऋग्, यजुः, साम, अथर्वेति चत्वारः, तन्त्रं वैदिकं बौद्धम् आर्हतं चेति त्रितयम्। तेषु वैदिकं वैष्णवं शैवं शाक्तं चेति त्रिविधम्। तत्र वैष्णवं द्वैतदृष्टिप्रधानम्, शैवं द्वैताद्वैतदृष्टिभेदेन द्विविधम्, शाक्तं चाद्वैतदृष्टिप्रधानमिति बहवो वदन्ति। परं वास्तवी तन्त्रदृष्टिस्त्वन्यादृश्येव। यथोक्तम्—

> द्वैतादन्यदसत्यकल्पमपरैरद्वैतमाख्यायते
> तद्द्वैते बत पर्यवस्यति कृतं वाचाटदुर्विद्यया।
> एते ते वयमेवमभ्युदयिनः कस्यापि कस्याश्चिद-
> प्यालस्योज्झितमैकरस्यमुभयोरद्वैतमाचक्ष्महे ॥

**संविदुल्लासस्य** एतद्वचनानुसारेण शिवाशिवयोः, शब्दतदर्थयोः, जीवजगतोः, जगज्जगदीशयोः, ज्ञानज्ञेययोः, भोगमोक्षयोश्च सामरस्यलक्षणं तादात्म्यमेव तन्त्रानुमतं तत्त्वम्।

मानवानां हृदयस्पर्शिनोऽस्य यथार्थस्य प्रतिपादनादेव तन्त्रं पुरा सर्वत्र विततं सर्वजनोपादेयं चाभवत्। आसीदिदं देशस्य किमपि दुर्दैवं यद्वशात् तान्त्रिको लोको भोगैकलक्ष्यो भवन् तान्त्रिकं ज्ञानमनुष्ठानं च भोगैकसाधनं मन्वानो भोगसाधनस्य च स्वात्मसात्करण एव स्वश्रेयोऽनुसन्दधानस्तदुभयं तथा गोप्यमकरोद् यथा तद् विरलप्रचारं भवद् विलयोन्मुखतां प्रत्यपद्यत। अस्याः प्रवृत्तेः परिणामतयाऽनेक आगमाः कालक्रमेण व्यलुप्यन्। तादृशागमानां यानि कानिचिद् वचनान्यनन्तरप्रणीतेषु विभिन्नग्रन्थेषु यत्र तत्रोद्धृतान्युपलभ्यन्ते, तेषां संग्रहस्तत्स्रोतोगवेषणं चातितरां दुरूहम्। यतो हि विद्वांसो विभिन्नान् ग्रन्थानधीयाना गजनिमीलिकया तत्रोद्धृतानि वचनानि प्रायेण समुपेक्षन्ते तन्मूलान्वेषणेऽलसस्वभावतया च न व्याप्रियन्ते, परं प्राच्यप्रतीच्यविद्याविपश्चिदपश्चिमाः साधनामयजीवनाः श्रीगोपीनाथकविराजमहोदयाः साधारणाध्येतृजनानामस्याः स्वाभाविक्याः प्रवृत्तेरपवादभूताः, त ईदृशा गम्भीरा गवेषकाः स्वाध्यायशीला मनीषिणश्च येऽधीयमानग्रन्थानामेकां मात्रामेकं वर्णं चापि न स्तोकमप्युपेक्षन्ते। ते हि तत्तद्ग्रन्थानुशीलनसमये यत्किमप्यक्षिगोचरीकुर्वन्ति, तस्य प्रामाणिकं स्रोतो यावन्नाधिगतं कुर्वन्ति तावन्न विश्राम्यन्ति न च तदन्वेषणाद् विरमन्ति। आत्मनोऽस्या अध्ययनप्रकृतेरेव ते तत्र तत्रोपलभ्यमानानां तन्त्रवचनानां स्रोतःसमुपलम्भे प्रयत्नशीलाः सन्तो लुप्तागमानां प्रस्तुतस्य संग्रहस्य सम्पादने सफला अभूवन्।

अस्मिन् संग्रहेऽकारादारभ्य हकारान्तं वर्णक्रमेण मूलागमानामुल्लेखपूर्वकं तदीयवचसां विन्यासोऽधस्तनटिप्पण्यां तदुद्धरणस्थलानां संक्षिप्तो निर्देशश्च कृतो वर्तते। वचांसि च तानि सर्वाण्येव निरतिशयमहत्त्वमर्थजातं प्रकाशयन्ति जगतोऽपूर्वं हितमाधातुं प्रभवन्तीति निर्विवादम्। तेषु

कियतामुदाहरणरूपेणात्रोपन्यासो मन्ये, मनीषिणां मनोमोदं नूनं विदध्यादिति तदर्थं स्वल्पो यत्न आश्रीयते। तद् यथा—

मा किञ्चिद् त्यज मा गृहाण।

**अनुत्तराष्टकस्यानेन** वचनेन हिताधायकस्य कस्यापि कयाऽपि दशाऽत्याज्यताम-हितावहस्य च कस्यामपि स्थितौ कुतोऽपि हेतोरग्राह्यतामुपदिशता मानवस्य महत्तमं श्रेयः संविधीयते।

बालिकारचितवस्त्रपुत्तिकाक्रीडितेन सदृशं तदर्चनम्।
यत्र शाम्यति मनो न निर्मलस्फीतचिज्जलधिमध्यमाश्रितम्॥

**अर्चनात्रिंशिकाया** अनेन वचनेनेदं तथ्यमुपदिश्यते यद् यथा बालिका वस्त्रैः पुत्तलिका निर्माय ताभिः क्रीडन्ति, परं ताभ्यो न किमपि लभन्ते, निरर्थकमेव भवति तत् क्रीडितम्, तथैव येनार्चनेनार्चितुर्मनो निर्मले निरवद्ये चिन्नीरधौ निमज्ज्य शान्तिं नासादयति तदर्चनमपि सर्वथा व्यर्थमेव।

गुणैरुपेताऽपि तु सिद्धविद्या कन्येव दत्ता गुणवर्जिताय।
सम्भोगहीना विदधात्यकीर्तिं दातुर्यतस्तत्प्रगुणाय दद्यात्॥

यथा निर्गुणाय दत्ता गुणवत्यपि कन्या प्रतिग्रहीत्रा यथोचितमनुपयुज्यमाना दातुरकीर्तिं तनुते, तथैव गुणगणगरिष्ठापि सिद्धविद्याऽपात्राय दीयमाना सम्यगनुपयोगाद् विद्यादातुर्यशो हिनस्त्यतः प्रकृष्टगुणायैव कन्याविद्ययोः प्रदानं श्रेयस्करमिति तत्त्वं **कल्लटाचार्यस्य** प्रकृतेन वचसा विज्ञाप्यते।

पतन्ति जन्तवो येन कर्मणा नरके ध्रुवम्।
उत्पतन्ति च तेनैव त्रिकालज्ञा भवन्ति च॥

**कालिकामतस्य** वचसानेन तत्त्वमिदं सम्यक् स्फुटीकृतं यद् यदेव कर्म प्राणिनां पातकं तदेव भावभेदेनानुष्ठितं तेषामुन्नायकं सम्पद्यते।

प्रत्यक्षेण यथा वृक्षो रूपमात्राद् विगृह्यते।
रसादयो गृहीता नो तथेशो ज्ञानशक्तितः॥
गृह्यते तत्त्वभावेन वस्तुभावविवर्जनात्॥

**किरणागमस्य** वचनमिदं तत्त्वमिदं सम्यक् स्पष्टयति यद् यथा रूपरसादीनामाश्रयो वृक्षश्चक्षुषा रूपवत्तयैव दृश्यते न रसादिमत्तया, तथैव तत्त्ववस्तुभेदेन भावद्वयात्मा शिवः साधक-ज्ञानेन तत्त्वभावेनैव गृह्यते न वस्तुभावेन।

शिवाद् गुरुतरा भक्तिर्यस्य नित्यं गुरौ सदा।
तस्य देयमिदं ज्ञानमन्यथा न कदाचन॥

**तन्त्रस्य** वचसाऽनेन गुह्यस्य तान्त्रिकज्ञानस्य पात्रता तत्रैव निर्णीता ,यो गुरुं शिवादपि गुरुतरं मन्येत ।

न मलो मलिनः कश्चिद् विद्यते वस्तुतः प्रिये ।
स्वमनोमलिनत्वेन मलमात्मनि कथ्यते ॥

**निशाकुलस्य** वचनमिदं मनोमालिन्यमेवात्मनो मलिनताया मूलमुद्घोषयत्तन्निराकृतय एव साधकेन सावधानेन भाव्यमित्यभिव्यनक्ति भव्यमर्थम् ।

यथा वायुः सुशीघ्रोऽपि मुक्त्वाऽऽकाशं न गच्छति ।
ज्ञेये निक्षिप्तचित्तस्तु विषयस्थो न मुञ्चति ॥

अनेन **निःश्वासागमवचनेन** तत्त्वमिदं स्फुटं प्रतिपाद्यते यद् यथा वेगवत्तरोऽपि वायुराकाशं विहातुं नार्हति, तथैव ज्ञेये परे तत्त्वे सन्निवेशितं चेतो विषयाभिमुखं ज्ञेयं परं तत्त्वं परित्यक्तुं न क्षमते ।

यद्वत् सोपानेन प्रासादमारुहेत् प्लवेन वा नदीं तरेत् ,
तद्वच्छास्त्रेणैव हि भगवान् शास्ताऽवगन्तव्यः ।

**पाञ्चरात्रश्रुतेरनेन** वचसा प्रासादारोहणे सोपानस्येव नदीतरणे प्लवस्येव च परमात्मबोधे शास्त्रस्यानिवार्योपादेयत्वं प्रतिपाद्यते ।

'संशयात्मा न सिध्यति'

**ब्रह्मयामलस्य** वचसाऽनेन संशयस्य सिद्धिबाधकत्वं वदता संशयत्यागः साधकस्य प्रथमकर्तव्यतया ध्वनितः ।

हंसाः पतन्ति गगने प्रविसार्य पक्षौ
स्वौ सर्वदैव किल मानसराजहंस ।
अत्यद्भुता तव गतिर्गगने परस्मिन्
विक्षेपशून्यमयपक्षयुगं विहाय ॥

**मनोऽनुशासकस्तोत्रस्यानया** गिराऽयमर्थः स्फुटीकृतो यत् प्रसिद्धा हंसाः पक्षयोः सहायतयैव भौतिके गगने गतिमन्तो भवन्ति, परं मनोरूपो राजहंसो विक्षेपशून्यतात्मकौ पक्षौ त्यक्त्वैव परतत्त्वात्मके गगने गतिमान् भवति ।

गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः ।
प्रश्नोत्तरपदैर्वाक्यैस्तन्त्रं समवतारयत् ॥

अनेन **महास्वच्छन्दवचसा** तन्त्रविद्याया आविर्भावस्य रहस्यमिदं स्थान उद्घाटितं यत् स्वयं भगवान् सदाशिव एव गुरुशिष्यरूपेण प्रादुर्भूय प्रश्नोत्तररूपेण तन्त्रं रचयाञ्चकार ।

इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवताम् ।
स्वभावेन समाराध्य ज्ञातुः सोऽयं महामखः ॥

**मुख्याम्नायरहस्यविधेरनयोक्त्या** घ्राणादिभिर्गृहीतैर्गन्धादिविषयैः स्वात्मनस्तर्पणमेव ज्ञातुर्महायाग इति प्रत्यपादि ।

शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयश्च जगत्सर्वं शक्तिमांस्तु महेश्वरः ॥

**रहस्यशास्त्रस्य** वचनमेतदमुमर्थमवद्योतयति यत् प्रामाणिकौ पदार्थौ द्वावेव, शक्तिः शक्तिमांश्चेति । तत्र चराचरात्मकं समग्रं जगदेव शक्तिः, भगवान् महेश्वर एव च शक्तिमान् ।

न पुनर्जन्मतां याति दीक्षितो मनुजोत्तमः ।

**रौरवागमस्य** वचनमिदं तान्त्रिक्या दीक्षया संस्कृतस्य मनुजन्मनः पुनर्जन्मराहित्यलक्षणां मुक्तिं स्फुटं प्रतिपादयति ।

"विश्वमिदं मन्मयं मत्कार्यत्वात्, यदित्थं तत्तथा यथा शरीरम्, इदं च मम कार्यं तस्मान्मन्मयम् ।"

अनेन **शम्भ्वैक्यदीपिकावचनेन** तत्कार्यत्वं तन्मयत्वव्याप्यमिति नियमं पुरस्कृत्य भगवत्कार्यस्य जगतो भगवन्मयत्वं समर्थितम् ।

व्याधीनां भेषजं यद्वत् प्रतिपक्षः स्वभावतः ।
तद्वत् संसारदोषाणां प्रतिपक्षः शिवः स्मृतः ॥

अनेन **शिवधर्मोत्तरवचनेन** भेषजसेवया व्याधय इव शिवसेवया संसारदोषा विनश्यन्तीति सत्यं निस्संशयं प्रत्यपादि ।

न हि बोधो विचित्रार्थनिर्माणेऽन्यमपेक्षते ।
संकल्पादेव यो रूपसहस्राणि सृजत्यजः ॥

**षाड्गुण्यविवेकस्य** वचसाऽनेनायमर्थोऽवद्योत्यते यन्नित्यबोधात्मको भगवान् संकल्पमात्रेणैव सर्वं जगत् सृजति न किमपि निमित्तान्तरमपेक्षते ।

अपरोक्षे भवत्तत्त्वे सर्वतः प्रकटे स्थिते ।
यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते ॥

**संवित्प्रकाशस्य** वचनमिदं बोधात्मनो भगवतः साधनानपेक्षामपरोक्षतां प्रतिपादयदर्थममुं विशदं व्यञ्जयति यदज्ञातस्य सत्त्वे मानाभावेन सर्वस्य ज्ञानानुविद्धताया आवश्यकतया प्रकाशमानं सर्वं ज्ञानेन सहैव प्रकाशत इति प्रत्येकमेव ज्ञानं बोधात्मकं भगवन्तं शिवं गोचरयतीति तज्ज्ञप्तौ नोपायान्तरापेक्षा ।

न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथिताऽनिशम् ।
स्वे महिम्न्यद्वये धाम्नि सा पूजा या परा स्थितिः ॥

**संकेतपद्धतेरनेन** वचसा सत्योऽयमर्थः सम्यक् स्फुटीकृतो यद् बाह्यपुष्पादिरूपैर्द्रव्यैः क्रियमाणा पूजा न वास्तविकी पूजा, अपि तु स्वमहिमलक्षणस्याद्वयधाम्नोऽवबोधलक्षणा पूजैव वास्तविकी पूजा ।

नान्यत्र गमनं स्थानं मोक्षोऽस्ति सुरसुन्दरि ।
अज्ञानग्रन्थिभेदो यः स मोक्ष इति कथ्यते ॥

**सर्वज्ञभैरवस्य** वचनमिदं तथ्यमिदमुचितं प्रकाशयति यन्मोक्षो नाम न क्वचित् स्थान-विशेषे गमनम्, अपि तु अज्ञानग्रन्थेर्विच्छेद एव ।

न पुम्भिरार्षवाक्यं च वैदिकं चर्षिभिस्तथा ।
न वेदैर्ब्रह्मणो वाक्यं वैष्णवं पद्मजन्मजैः ॥
न शैवं विष्णुवचनैर्बाध्यते तु कदाचन ।

**सर्वज्ञानोत्तरस्यानेन** वचनेन पौरुषेयवचसा ऋषिवचनस्य, आर्षवचसा वेदवचनस्य, वेदवचसा ब्रह्मवचनस्य, ब्रह्मवचसा विष्णुवचनस्य, वैष्णववचसा शिववचनस्याबाध्यतां ब्रुवता तन्त्रशास्त्रात्मनः शैववचसः सर्वतो वैशिष्ट्यं विस्पष्टीकृतम् ।

न हृष्यत्युपकारेण नापकारेण तृप्यति ।
यः समः सर्वभूतेषु जीवन्मुक्तः स कथ्यते ॥

**सर्वज्ञानोत्तरस्यैतद्वचनानुसारेण** स एव पुरुषो जीवन्मुक्तो यः स्वं प्रति कृतेनोपकारेण हृष्टोऽपकारेण च रुष्टो न भवति, अपि तूपकर्तरि, अपकर्तरि, तटस्थे च समभावस्तिष्ठति ।

( १ )

सेव्यन्ते गुरवोऽनेके ज्ञानविज्ञानभासुराः ।
दुर्लभोऽयं गुरुर्देवि योऽहङ्कारक्षयङ्करः ॥
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनाहङ्कारनिर्मुक्तः केवलो विदितः स्वयम् ॥

( २ )

बुद्धिप्राणशरीराख्ये यदेतस्मिन् पुरत्रये ।
अहङ्काराद् वसत्यात्मा तेनायं पुरुषः स्मृतः ॥
एतत्पुरत्रयं दग्धं येन स त्रिपुरान्तकः ।
स एव पुरुषः प्रोक्तः स्मरारिरपि स स्मृतः ॥

हंसभेदस्य वचोभिरमीभिः शिष्यस्याहङ्कारक्षपणं गुरोः कर्तव्यम्, अहङ्कारात्मनो विमोचनमेव अध्ययनादेः प्रयोजनम्। बुद्धिः प्राणाः शरीरमित्येतत्त्रयमेव त्रिपुरम्, एष्वहंभावेन ग्रस्तः पुरुष एव त्रिपुरासुरः स्मरश्च, एतेष्वहम्भावस्य विलयनमेव त्रिपुरस्य कामस्य च दाहः, एतत्कर्ता पुमानेव त्रिपुरान्तकः कामान्तकश्च शिव इत्येव तत्त्वं स्फुटीकृतम्।

तदित्थं महार्थसार्थसमुपस्थापकस्य लुप्तागमसंग्रहस्य प्रथमं भागं पण्डितानां पुरतः प्रकाशं प्रापयतो वाराणसेयसंस्कृतविश्वविद्यालयस्य परिवारेण प्राप्यमाणः प्रमोदो नितरां वाचामगोचर इति प्रवेदयतो मे महान् मनस्तोषः। अस्य संग्रहस्य सङ्कलनया कविराजमहाभागैर्न केवलं तान्त्रिकवाङ्मयस्य विलुप्यमानं वैभवमेव रक्षितमपि तु तान्त्रिके ज्ञाने निष्ठां दधानो महान् जनसमुदायोऽपि चिरमुपकृतः। अतः कविराजमहाशयाः समग्रस्य विद्यारसिकस्य जगतो निस्संशयं हार्दान् धन्यवादानर्हन्ति।

आशासे, कविराजमहोदयानामनुकार्यया गभीरया विद्याऽऽराधनया प्रेरितास्तदाध्यक्ष्ये योगतन्त्रविभागे कार्यं कुर्वन्तोऽपरेऽपि विद्वांसस्तन्त्रसम्बन्ध ईदृशेषु स्तुत्यकार्येषु सोत्साहं स्वात्मसमर्पणं करिष्यन्तीति।

**वाराणसेयसंस्कृतविश्वविद्यालयः**
वाराणसी।

**बदरीनाथ शुक्लः**
**अनुसन्धानसंचालकः**
८–३–७०

# विषयानुक्रमणी

# लुप्तागमसंग्रहः

## ( प्रथमो भागः )

## अचिन्त्यागमः

( १ )

[1]चतुर्विंशतिसंख्यातमशुद्धं भोग्यकाण्डकम् ।
ततो हि मिश्रतत्त्वं च भोक्तृकाण्डं तु सप्तकम् ॥
प्रेरकं शुद्धतत्त्वं च स्वतन्त्रं तच्छिवस्य तु ।

( २ )

[2]जायेते पुण्यपापौ तौ मनोवाक्कायकर्मभिः ।
तन्मनःकर्म चेत्याहुः पुंसश्चित्तापराधतः ॥ ५
सत्यज्ञानोपदेशश्च प्रियमप्रियमन्यतः ।
अनित्यमज्ञानरतमेतद् वाक्कर्म चोच्यते ॥
दानाहिंसापरश्चैव हिंसाचर्यासुरावशः ।
विषये सक्तिरित्यादि कायिकं समुदाहृतम् ॥

( ३ )

[3]शास्त्रजालानि नादान्तं पाशज्ञानं वरानने । १०
पशुज्ञानमिति प्रोक्तं ह्यहं ब्रह्माभिमानतः ॥
शिववस्तुपरं तस्मान्मन्त्रातीतो निरञ्जनः ।
सर्वज्ञः सर्वगः शान्तः सर्वात्मा सर्वतोमुखः ॥

( ४ )

[4]अन्यथा बहुमुक्त्युक्तिः शास्त्रे चैव वरानने ।
शिवत्वसुलभा मुक्तिरिदानीं कथ्यते मया ॥ १५



---

१. श० र० सं० पृ० ५३ । २. श० र० सं० पृ० ५६ ।
३. श० र० सं० पृ० ७६ । ४. ज्ञ० र० सं० पृ० ८५ ।

## अद्वयोल्लासः

[1]भ्रमः संसारो यत् कथमिव भवेन्मुक्तिरमुत-
स्त्वितीयं या वाञ्छा बत जडधियां सा प्रसरति ।
त्वदन्यन्नास्तीति प्रभवद् विकल्पाद्वयमतेः
स्थिरीकारो मोक्षो द्वितयघटना संसृतिरतः ॥



## अनन्तविजयागमः

[2]उत्तानं तु करं कृत्वा तिस्रोऽङ्गुल्यः प्रसारयेत् । २०
मध्यमाङ्गुष्ठकौ लग्नौ चालयेत मुहुर्मुहुः ॥
नाराचः कीर्तितो ह्येवम्............... ।



## अनिरुद्धः

[3]श्रीमताऽप्यनिरुद्धेन शक्तिमुन्मीलिनीं विभोः ॥
व्याचक्षाणेन मातङ्गे वर्णिता निरपेक्षता ।
स्थावरान्तेऽपि देवस्य स्वरूपोन्मीलनात्मिका ॥ २५
शक्तिः पतन्ती सापेक्षा न क्वापीति सुविस्तरात् ।



---

१. म० म० पृ० २५–२६ ।

२. त० आ० वि० ४।२५१, पृ० २८१ ।

३. त० आ० वि० १३।२९३-९५; पृ० १७८–७९ ।

## अनुत्तरभट्टारकः

[1]मृतचेष्टस्य पिण्डस्य न किञ्चिदुपलभ्यते ।
सुखं दुःखं न चैवास्ति परमानन्दभावनात् ॥
जिज्ञासारहितं स्थानं यत्र देवो निरञ्जनः ।
अकालकलनाहेतुर्गमागमविवर्जितः ॥ ३०
निरालम्बो निरुत्साहः शून्यभूतः शिवः स्वयम् ।
संज्ञानाशेन निर्जीवसंज्ञा सा व्योमरूपिणी ॥
( तथा तत्रैव देवीं प्रति वचनान्तरम् )—
विचरामि न चैकाकी कदाचिच्छून्यरूपता ।
सर्वः सर्वमयश्चाहं तद्रमेऽहं त्वया सह ॥
कदाचिदीदृशं विश्वं दृश्यमेतदितीरितम् । ३५

## अनुत्तराष्टकम्

Published Abhi's works

[2]मा किञ्चित् त्यज मा गृहाण

## अनुप्रत्यभिज्ञा

[3]नाथ त्वया विना बिम्बं स्वच्छे स्वात्मनि दर्शितम् ।
प्रसेना दर्पणेनैव प्रभावाद् भावमण्डलम् ॥

१. वि० भै० वि०, श्लो० १३८ ।

२. त० आ० वि० ५ । ७४; पृ० ३८३ ।

३. त० आ० वि० ३ । ६४; पृ० ७२ ।

# अनुभवस्तोत्रम्

[१]त्वं पृथग्विगतबाह्यसंभ्रमस्तिष्ठसीश्वर यदात्मचित्यलम् ।
लूनमूलकलनैः कुतस्तदागम्यतामतनुमायिता गुणैः ॥ ४०

# अभेदकारिका

[२]वस्तुनो भावशून्यस्य त्वग्राह्यस्य निराकृतेः ।
कल्पनामात्रमेवैतत् यच्छिवव्यपदेशनम् ॥
नेत्थं विभोर्विवर्तोऽस्ति परिणामश्च न क्वचित् ।
अथवा द्वयमप्यस्तु तथाप्यस्य न खण्डना ॥

# अर्चनात्रिंशिका

[३]बालिकारचितवस्त्रपुत्रिकाक्रीडितेन सदृशं तदर्चनम् । ४५
यत्र शाम्यति मनो न निर्मलस्फीतचिज्जलधिमध्यमाश्रितम् ॥

# अशेषकुलवल्लरी

[४]यत्रास्ति भोगो नहि तत्र मोक्षो यत्रास्ति मोक्षो नहि तत्र भोगः ।
शिवापदाम्भोजयुगार्चकानां भुक्तिश्च मुक्तिश्च करस्थितेव ॥

---

१. म० प०, पृ० २७ ।
२. स्प० प्र०, पृ० ४ ।
३. म० प०, पृ० १११ ।
४. सौ० ल० सौभा०, श्लो० १२ ।

# आगमः

( १ )

[1]जलं हिमं च यो वेद गुरुवक्त्रागमात् प्रिये ।
नास्त्येव तस्य कर्तव्यं तस्यापश्चिमजन्मता ॥ ५०

( २ )

[2]अथ ब्रह्म परं शुद्धमादिवर्णत्वमागतम् ।
अम्बिकाऽधस्ततस्तिस्रो युगपच्छक्तयः पुनः ॥
ज्येष्ठा रौद्री तथा वामा सुप्तनागेन्द्रसन्निभा ।
रौद्री भृङ्गाटकाकारा ऋजुरेखा तथा परा ॥
इत्येताः कारणं ज्ञेयाः सर्वमाभ्यः प्रवर्तते । ५५
परापरपदप्राप्तौ शान्त्याद्याः परिकीर्तिताः ॥
शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चापरा स्मृता ।
व्योमपञ्चकमाविष्टाः परमात्मपदास्पदाः ॥
ता एवापररूपेण जयाद्या गुह्यशक्तयः ।

( ३ )

[3]पृथक् पृथक् स्वकार्यस्था यावत्तिष्ठन्ति देवताः । ६०
तावत् क्रमकृता संज्ञा विद्यते नान्यथा पुनः ॥
एकीभावतया सर्वमनाख्यायां यदा स्थितम् ।
अक्रमस्तु तदा ज्ञेयः प्रोत्तीर्णः सर्वतो यतः ॥

( ४ )

[4]द्वादशारावियोगेन देवीं द्वादशधा यजेत् ॥

---

१. शि० वि०, पृ० ९८ ।
२. त० आ० वि० ४ । १७३, पृ० २०० ।
३. त० आ० वि० ४।१२५, पृ० १३२ ।
४. त० आ० वि० ४।१७३, पृ० १८८ ।

( ५ )

[1]यत्सृष्टिस्थितिसंहाररक्तैश्च यममृत्युभिः । ६५
रुद्रमार्तण्डपरमादित्यकालाग्निरुद्रकैः ॥
पदैश्च समहाकालैः कालीशब्दान्तयोजितैः ।
महाभैरवचण्डोग्रघोरकालीपदं नयेत् ॥

## आगमरहस्यम्

( १ )

[2]साक्षाद् भवान् यदि विधाय न मूर्तिमाद्यां
तत्त्वं निजं तदवदिश्यदतोऽतिगुह्यम् । ७०
नाज्ञास्यत त्रिभुवनं ध्रुवमन्धमूक-
कल्पं समस्तमसमञ्जसतामयास्यत् ॥

( २ )

[3]येऽपीश्वरं व्यपदिशन्ति निमित्तहेतुं
तैरर्पितः स्थलजलाञ्जलिरीशितायै ।
अन्याङ्गनोपगमनेन वशीकृतस्य ७५
कामीश्वरस्थितिममी बत सङ्गिरन्ते ॥

( ३ )

[4]आकारवर्ग उपरि प्रतिभासतेऽस्य
ज्ञानस्य साऽपि तव विश्वमयी विभूतिः ।
विश्वात्मकस्त्वमिति नागमसिद्धमेतत्
किन्तु स्वसंविदितरूपतयाऽपि सिद्धम् ॥ ८०

---

१. त० आ० वि० ४।१७३; पृ० १९१ ।
२. स्प० प्र०, पृ० २ ।
३. स्प० प्र०, पृ० २३ ।
४. स्प० प्र०, पृ० ३६ ।

## आचारप्रकरणम्

[1]न ध्यानं न जपः पूजा न होमो नैव साधनम् ।
अग्निकार्याधिकारश्च नैतस्याऽस्ति महेश्वरः ॥

## आज्ञावतारः

[2]स्वेच्छयैव जगत्सर्वं निगिरत्युद्‌गिरत्यपि ।

## आत्मसंबोधः

[3]भवेद्भवानामभवाय नूनं स्वभावसंविद्धिदितैव पुंसाम् ।
अमर्त्यतां मर्त्यजने करोति सकृत् सुधाप्राशनमात्रमेव ॥ ८५

## आत्मसप्ततिः

( १ )

[4]वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता ।
विकल्पघटितावेतावुभावपि न किञ्चन ॥

( २ )

[5]यद्यद्वस्तु स्वभावेन ज्ञानेन विषयीकृतम् ।
तद्वत्तादात्म्यमायाति जीवः सर्वमयो ह्यतः ॥

( ३ )

[6]यदिदं दृश्यते किञ्चिद् दर्शनात्तन्न भिद्यते । ९०
दर्शनं द्रष्टृतो नान्यद् द्रष्टैव हि ततो जगत् ॥

---

१. श० र० सं०, पृ० ८६ । २. यो० दी०, पृ० १५, ९४, २६४, ३०७ ।
३. स्प० प्र०, पृ० ४२ । ४. स्प० प्र०, पृ० ८ ।
५. स्प० प्र०, पृ० ३६ । ६. स्प० प्र०, पृ० ३९ ।

## आनन्दभैरवः

[१]उत्सृज्य लौकिकाचारमद्वैतं मुक्तिदं श्रयेत् ।
स समं सर्वदेवानां तथा वर्णाश्रमादिके ॥
द्रव्याणां समतादर्शी स मुक्तः सर्वबन्धनैः ।

## आलोकमाला

[२]विरुद्धत्वात्तमोवृत्तेर्नावकाशं ददाति या । ९५
साऽवस्था काप्यविज्ञेया मादृशा शून्यतोच्यते ॥
न पुनर्लोकरूढ्यैव नास्तिक्यार्थानुपातिनी ।

## इष्टोपदेशः

[३]यदिदं दृश्यते दृष्ट्या ग्रहं पुत्रांश्च सन्त्यज ।
येन पश्यति तं पश्य यं दृष्ट्वा पश्यसेऽखिलम् ॥

## उच्छुष्मभैरवः

[४]यावन्न वेदका एते तावद्वेद्याः कथं प्रिये । १००
वेदकं वेद्यमेकं तु तत्त्वं नास्त्यशुचिस्ततः ॥

## उत्तरपदम्

[५]व्योमाम्बुजे सहस्रारे सितकेसरसंकुले ।
तत्रासीनं महादेवमपृच्छत् कुलनायिका ॥

१. शि० वि०, पृ० १०७ ।
२. स्प० प्र०, पृ० १८ ।
३. स्प० प्र०, पृ० २३ ।
४. शि० वि०, पृ० ८ ।
५. यो० दी०, पृ० २७१ ।

## उद्धारोर्ध्वतन्त्रम्

[1]चन्द्रः शक्तिर्महाशक्तिर्ब्रह्माणी कामिकादिकम् ।

## उपचारोपनिषत्

[2]बहिरपि गन्धपुष्पधूपदीपनैवेद्यानि पृथिव्याकाशवायुतेजस्सलिल- १०५
भावनया देव्यै समर्पयेत् ।

## उपायविंशतिः

[3]स्थूलं स्थूलं परित्यज्य सूक्ष्मं सूक्ष्मं समाश्रयेत् ।
पश्चात् सूक्ष्ममपि त्यक्त्वा केवलं चिन्मयो भवेत् ॥

## ऊर्मिकौलसिद्धसन्तानशास्त्रम्

( १ )

[4]शून्यं न किञ्चित्तच्छून्यं त्वशून्यं शून्यता नहि ।
यदकिञ्चित् कथं तद्धि न किञ्चिच्छेत्तुमर्हति ॥ ११०

( २ )

[5]आत्मा शून्य इह ज्ञेयः शिवधर्मैर्विना कृतः ।
शिवशून्योऽधिगन्तव्यो विमलोऽमूर्तविग्रहः ॥

( ३ )

[6]नास्त्यस्ति नास्ति नास्तीति कोटयो न स्पृशन्ति हि ।
वाचामगोचरं यस्मात् तत्तत्त्वमिह कथ्यते ॥

---

१. यो० दी०, पृ० २८ ।
२. यो० दी०, पृ० २७२ ।
३. म० प०, पृ० १४८ ।
४. त० आ० वि० २।४८; पृ० ३९ ।
५. त० आ० वि० २।४८; पृ० ३९ ।
६. त० आ० वि० २।४८; पृ० ४० ।

यदभावि न तद्भावि यद्भावि न तदन्यथा । ११५
एवं विचिन्त्य मतिमान् विकल्पं न समाश्रयेत् ॥
तच्च सर्वगतं सूक्ष्ममुपाधिपरिवर्जितम् ।

## ऋजुविमर्शिनी

( १ )

[1]पूजा विश्वस्य वेद्यस्य चिद्भूमिविश्रान्तिः ।

( २ )

[2]एतच्चास्मत्परमगुरुकर्तृके श्रीमदृजुविमर्शिन्यादौ विमर्शनीयम् ।

( ३ )

[3]मातृकां परवागात्मानाहतभट्टारकपरमशिवस्वरूपां षट्त्रिंशत्तत्त्वप्रसरणहेतुभूतां संविदमित्यर्थः । १२०

( ४ )

[4]चतुष्पीठाधिष्ठातृमहासंविदालम्बनेन प्रवृत्तचतुःस्रोतोरूपा महापदवी चतुराज्ञा । तस्याः कोशभूता महाधिष्ठात्री शेवधिस्ताम् ।

( ५ )

[5]इह हि विद्यायां त्रिष्वपि बीजेष्वन्तस्थातृतीयमस्ति, सम्प्रदायस्य काश्मीरोद्भूतत्वात्, प्राकृतभाषाविशेषत्वाच्च; यथासम्प्रदायं व्यवहार इत्युपदेशः । १२५

---

१. म० प०, पृ० ११२ ।
२. म० प०, पृ० १२३ ।
३. म० प०, पृ० १२९ ।
४. म० प०, पृ० १७८ ।
५, म० प०, पृ० १९३ ।

## कक्ष्यास्तोत्रम्

( १ )

[1]त्वदाशयोन्मेषनिमेषमात्रमयौ जगत्सर्गलयावितीदृक् ।
स्फुटे स्फुटं त्वन्महिमावभाति विचित्रनिर्माणनिदर्शनेव ॥

ज्ञानक्रियादिगर्भेच्छाशक्तिर्यः प्रसरात्मकः ।
संकल्पोक्तः स उन्मेषः प्रोक्तं ह्येतत् स्वतन्त्रके ॥ १३०
यत्र यत्र भवेदिच्छा ज्ञानं तत्र प्रवर्तते ।
क्रियाकरणसंयोगात् पदार्थस्योदयो भवेत् ॥

( २ )

[2]ज्ञानं प्रशान्तं तव बोधवृत्तिरैश्वर्यमुद्यत्प्रसरा परेषाम् ।
प्रकाशनं प्रत्यपि योग्यरूपा शक्तिर्बहिः स्थैर्यवती बलं सा ॥
उत्पन्नबाह्यप्रसरां तु वीर्यं तेजश्च बाह्यानवभासयन्ति । १३५
षोढेत्थमेकैव तव स्वशक्तिर्बाह्यावमर्शात्तु भवेद्विद्या ॥
तत्र सर्वज्ञता ज्ञानं सर्वं हि जायते ततः ।

( ३ )

[3]सर्वाः शक्तीश्चेतसा दर्शनाद्याः
स्वे स्वे वेद्ये यौगपद्येन विष्वक् ।
क्षिप्त्वा मध्ये हाटकस्तम्भभूत- १४०
स्तिष्ठन् विश्वाधार एकोऽवभासि ॥

## कर्मकाण्डक्रमावली

[4]त्रयीसप्तचतुर्युग्ममये त्रितयवर्त्मनि ।
स्थितो यः शक्तिसहितः स जयत्यमृतेश्वरः ॥

---

१. स्प० प्र०, पृ० १० ।
२. स्प० प्र०, पृ० २६ ।
३. प्र० हृ०, सू० १८ ।
४. वि० भै० वि०, श्लो० ५७ ।

## (भट्ट) कल्लटः

( १ )

[1]स्वोद्यन्तृतः स्वरूपस्पन्दोल्लासेन चोदितश्च यदा ।
परवश इव प्रवृत्तस्तदा न गर्वान्मयेयमारब्धा ।। १४५

( २ )

[2]गुणैरुपेताऽपि तु सिद्धविद्या कन्येव दत्ता गुणवर्जिताय ।
सम्भोगहीना विदधात्यकीर्तिं दातुर्यतस्तत्प्रगुणाय दद्यात् ।।

## कामसिद्धिस्तोत्रम् (वत्सराजकृतम्)

[3]लोकाश्चतुर्दश महेन्द्रमुखाश्च देवाः
मूर्तित्रयं मुनिगणाश्च वशिष्टमुख्याः ।
सद्यो भवन्ति न भवन्ति समस्तमूर्ते- १५०
रुन्मीलनेन तव देवि निमीलनेन ।।

## कामिकः

( १ )

[4]निधनेशात् स्वयंभूतं त्रिकोट्यर्धेन सम्मितम् ।
निधनेशात् स्वयंभूतं श्रुतवान् नलिनोद्भवः ।।

( २ )

[5]लौकिकं वैदिकं चैव तथाध्यात्मिकमेव च ।
अतिमार्गं च मन्त्राख्यं तन्त्रभेदमनेकधा ।। १५५

---

१. स्प० प्र०, पृ० २ ।
२. स्प० प्र०, पृ० ५४ ।
३. सौ० ल० अरु०, पृ० २२१ ।
४. श० र० सं०, पृ० ३ ।
५. श० र० सं०, पृ० ८ ।

सद्योवाममहाघोरपुरुषेशानमूर्तयः ।
प्रत्येकं पञ्चवक्त्राः स्युस्तैरुक्तं लौकिकादिकम् ॥
पञ्चविंशतिभेदेन स्रोतोभेदः प्रकीर्तितः ।
एष्वेवान्तर्गतं वस्तु वाङ्मयं वस्तुवाचकम् ॥

( ३ )

[1]तथैव मन्त्रतन्त्राख्यं सदाशिवमुखोद्भवम् । १६०
सिद्धान्तं गारुडं वामं भूततन्त्रञ्च भैरवम् ॥
ऊर्ध्वपूर्वकुबेराप्ययाम्यवक्त्राद् यथाक्रमम् ।
सामान्यं च विशेषं च शैवं वैशिष्टिकं वचः ॥

( ४ )

[2]आदावभूद् द्विधा ज्ञानमधिकारिविभेदतः ।
परापरेण भेदेन पतिपश्वर्थदर्शकम् ॥ १६५
शिवप्रकाशकं ज्ञानं शिवज्ञानं परं स्मृतम् ।
वेदाद्यपरविज्ञानं पशुपाशार्थदर्शकम् ॥
यथा विलक्षणं चक्षुः क्षपायां श्वविडालयोः ।
तथा विलक्षणं ज्ञानमेवमेतत् परापरम् ॥

## कालपरा

( १ )

[3]शब्दो नादात्मकस्तस्मात् प्रत्ययेनोपबृंहितः । १७०
मन्त्रबोधस्वरूपस्थमभिन्नो बोधयत्यपि ॥

---

१. श० र० सं०, पृ० ९ ।
२. श० र० सं०, पृ० ९ ।
३. स्प० प्र०, पृ० ३३ ।

( २ )

[1]पराक्षरतरोर्धातुर्नानाशक्तेर्विवर्तगाः ।
शक्तयो वर्णदेहेषु वक्त्राद्वर्णत्वमागताः ॥

## कालिकाक्रमः

( १ )

[2]तत्तद्रूपतया ज्ञानं बहिरन्तः प्रकाशते ।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥ १७५
नहि ज्ञानादृते भावाः केनचिद्विषयीकृताः ।
ज्ञानं तदात्मतां यातमेतस्मादवसीयते ॥

( २ )

[3]तस्मान्नित्यमसंदिग्धं बुद्ध्वा योगं गुरोर्मुखात् ।
अविकल्पेन भावेन भावयेत्तन्मयत्वतः ॥
यावत्तत्समतां याति भगवान् भैरवोऽब्रवीत् । १८०

( ३ )

[4]तस्य देवातिदेवस्य परबोधस्वरूपिणः ।
विमर्शः परमा शक्तिः सर्वज्ञा ज्ञानशालिनी ॥

( ४ )

[5]अस्तिनास्तिविभागेन निषेधविधियोगतः ।
ज्ञानात्मता ज्ञेयनिष्ठा भावानां भावनाबलात् ॥
युगपद्वेदनाज्ज्ञानज्ञेययोरेकरूपता । १८५

---

१. स्प० प्र०, पृ० ३४ ।
२. त० आ० वि० ५ । ८०, पृ० ३९०; शि० वि०, पृ० ११९ ।
३. शि० वि०, पृ० १११ ।
४. शि० वि०, पृ० ११३ ।
५. शि० वि०, पृ० ११८ ।

( ५ )

[1]अस्तिनास्तिविभागेन .................. ।
सर्वं शुद्धं निरालम्बं ज्ञानं स्वप्रत्ययात्मकम् ।
यः पश्यति स मुक्तात्मा जीवन्नेव न संशयः ॥

( ६ )

[2]नाशेऽविद्याप्रपञ्चस्य स्वभावो न विनश्यति ।
उत्पत्तिध्वंसविरहात् तस्मान्नाशो न वास्तवः ॥ १९०
यतोऽविद्या समुत्पत्तिध्वंसाभ्यामुपचर्यते ।
यत् स्वभावेन नष्टं न तन्नष्टं कथमुच्यते ॥

( ७ )

[3]सुखदुःखादिविज्ञानविकल्पानल्पकल्पितम् ।
भित्वाऽद्वैतमहामोहे योगी योगफलं लभेत् ॥

( ८ )

[4]यदविद्यावृततया विकल्पविधियोगतः । १९५
शिवादीन्नैव झटिति समुद्भावयतेऽखिलान् ॥
ततः शुभाशुभा भावा लक्ष्यन्ते तद्वशत्वतः ।
अशुभेभ्यश्च भावेभ्यः परं दुःखं प्रजायते ॥

( ९ )

[5]अतथ्यां कल्पनां कृत्वा पच्यन्ते नरकादिषु ।
स्वोत्थैर्दोषैश्च दह्यन्ते वेणवो वह्निना यथा ॥ २००

---

१. शि० वि०, पृ० ११९ ।
२. शि० वि०, पृ० १२० ।
३. शि० वि०, पृ० १२३ ।
४. शि० वि०, पृ० १२३,१३२ ।
५. शि० वि०, पृ० १३२ ।

मायामयैः सदा भावैरविद्यां परिभुञ्जते ।
मायामयीं तनुं यान्ति ते जनाः क्लेशभाजनम् ॥

( १० )

[1]यथा स्वप्नानुभूतार्थान् प्रबुद्धो नैव पश्यति ।
तथा भावनया योगी संसारं नैव पश्यति ॥

( ११ )

[2]निरस्य सदसद्वृत्तीः संश्रित्य पदमान्तरम् । २०५
विहाय कल्पनाजालमद्वैतेन परापरम् ॥
यः स्वात्मनिरतो नित्यं कालग्रासैकतत्परः ।
कैवल्यपदभाग् योगी स निर्वाणपदं लभेत् ॥

## कालिकामतम्

[3]पतन्ति जन्तवो येन कर्मणा नरके ध्रुवम् ।
उत्पतन्ति च तेनैव त्रिकालज्ञा भवन्ति च ॥ २१०

## कालोत्तरसूत्रम्

( १ )

[4]पञ्चत्रिंशतितत्त्वं हि शिवतत्त्वाद् विनिर्गतम् ।
तत्र स्थितिश्च वृद्धिश्च तत्रैव च लयो भवेत् ॥

( २ )

[5]विश्वस्याऽनेकरूपस्य ज्ञानमेकं शिवात्मकम् ।
व्यापकं विमलं शान्तं भुक्तिमुक्तीति येन तत् ॥

---

१. शि० वि०, पृ० १३३ । २. शि० वि०, पृ० १३३-३४ ।
३. म० प०, पृ० २३ । ४. श० र० सं०, पृ० ४२ ।
५, श० र० सं०, पृ० ७४ ।

# किरणागमः

( १ )

[1]निष्कलः किं न कल्योऽसौ यद्वा कल्यः कथं जगत् । २१५
यथाऽत्र कुरुते शक्त्या तथा शास्त्रं न किं प्रभुः ॥

( २ )

[2]सृष्ट्यनन्तरमेवेशः शिवान् सृष्ट्वा दशात्मजान् ।
ज्ञानमेव विभज्यैकं तेषां तत्संख्ययाऽवदत् ॥

कामिकं प्रणवाख्यस्य सुधाख्यस्य तु योगजम् ।
दीप्ताख्यस्यापि चिन्त्यं तु कारणाख्यस्य कारणम् ॥ २२०

अजितं सुशिवाख्यस्य ईशस्यापि सुदीप्तकम् ।
सूक्ष्मं तु सूक्ष्मसंज्ञस्य कालस्यापि सहस्रकम् ॥

सुप्रभेदं गणेशस्य ह्यंशुसंज्ञस्य चांशुमान् ।
एवं प्राथमिकं प्रोक्तं पुनरन्यो गुरुक्रमः ॥

प्रणवात् त्रिकलः प्राप्तः कामिकं त्रिकलाद्धरः । २२५
सुधाख्याद् योगजं तन्त्रं भस्मसंज्ञस्ततः प्रभुः ॥

दीप्ताद् रुद्रात्तु चिन्त्यं च गोपतिश्च ततोऽम्बिका ।
कारणं कारणाच्छर्वस्ततः प्राप्तः प्रजापतिः ॥

अजितं सुशिवात् प्राप्त उमेशोऽप्यच्युतस्ततः ।
ईशाद् दीप्तं त्रिमूर्त्तिस्तु ततः प्राप्तो हुताशनः ॥ २३०

सूक्ष्मं सूक्ष्माद् भवः प्राप्तस्तस्मात् प्राप्तः प्रभञ्जनः ।
कालसंज्ञात् सहस्राख्यं भीमो धर्मस्ततः खगः ॥

गणेशात् सुप्रभेदाख्यं त्वविघ्नेशस्ततः शशी ।
अंशुमच्चांशुसंज्ञात् तु प्राप्तो ह्यग्रस्ततो रविः ॥

---

1. श० र० सं०, पृ० ८ ।  2, श० र० सं० पृ० १०–१२ ।

एवमेते शिवाः ख्याताः शिवभेदा दशाद्यके । २३५
दशाष्टसंख्ययाऽप्यन्यो रुद्रभेदः परो मतः ॥
दशाष्टसंख्यया रुद्रान् पूर्वमुत्पाद्य बुद्धिमान् ।
शिवस्तत्संख्ययैवेह पुनस्तान् बोधयत् खगः ॥

रुद्रस्यानादिसंज्ञस्य विजयं तन्त्रमुत्तमम् ।
पारमेशं महातन्त्रं श्रीरूपस्य प्रभाषितम् ॥ २४०
निश्वासं यद् दशार्णस्य प्रोद्गीतं नाम शूलिनः ।
मुखबिम्बं प्रशान्तस्य बिन्दोः सिद्धमतो मतम् ॥

शिवनिष्ठस्य सन्तानं सिंहं सोमस्य चोदितम् ।
चन्द्रहासमनन्तस्य भद्रं सर्वात्मनो मतम् ॥
निधनस्य स्वयम्भूतं विरजं तेजसः स्मृतम् । २४५
कौरव्यं ब्रह्मणेशस्य शिवाख्यस्य च माकुटम् ॥

किरणं देवपितुः ख्यातं ललितं चालयस्य तु ।
आग्नेयं यच्च तद् व्योम्नः शिवस्यापि पुनः परम् ॥
एते जाताः सह ज्ञाने शिवदेहात् पुनः शृणु ।
प्राप्तश्चानादिसंज्ञात्तु विजयं परमेश्वरः ॥ २५०

श्रीरूपात् पारमेशं तु प्राप्तोऽस्मादुशना मुनिः ।
दशाक्षराच्च निश्वासं संप्राप्ता शैलसम्भवा ॥
प्रोद्गीतं रुद्रसंज्ञात् तु कचाख्यो मुनिसत्तमः ।
प्रशान्तो मुखबिम्बं तु दधीचिर्नाम यो मुनिः ॥

बिन्दुसंज्ञाच्च यत् सिद्धं प्राप्तश्चण्डेश्वरो गणः । २५५
शिवनिष्ठाच्च सन्तानं संप्राप्तो हंसवाहनः ॥
नारसिंहं तु यत् सौम्यान् नृसिंहः प्राप्तवान् महान् ।
अनन्ताच्चन्द्रहासं तु प्राप्तो देवपुरोहितः ॥
भद्रं सर्वात्मदेवात्तु वीरभद्रो महागणः ।
स्वायम्भुवं तु निधनात् संप्राप्तः पद्मसंभवः ॥ २६०

विरजं तेजसः प्राप्तः प्रजारक्षणतत्परः ।
कौरव्यं ब्रह्मणेशात्तु सम्प्राप्तो नन्दिकेश्वरः ॥
ईशानाद् मुकुटं प्राप्तो महादेवो ध्वजाश्रयः ।
किरणं देवपितृतः प्राप्तः संवर्तको मुनिः ॥
आलयाल्ललितं प्राप्तो रुद्रो भैरवरूपवान् । २६५
आग्नेयं व्योमसंज्ञात्तु सम्प्राप्तो हुतभुक् पुनः ॥
तन्त्रभेदो मया प्रोक्तश्चात्र संक्षिप्तलक्षणः ।
येषु भेदेषु यो भेद उपभेदः स उच्यते ॥
भेदोऽयमुपचारेण कल्पितः स यतस्ततः ।
फलभेदो न कल्प्योऽत्र ज्ञानभेदः प्रकल्प्यते ॥ २७०

( ३ )

[1]अनुष्टुप्छन्दसा पूर्वं निबद्धं बहुकोटिभिः ।
सदाशिवेन देवेन ततोऽनन्तेन धीमता ॥

( ४ )

[2]प्रोक्तः स निष्कलः स्थूलस्तथा सकलनिष्कलः ।
ईशः सदाशिवः शान्त इति नाम्ना स्थितस्त्विह ॥
इच्छानुग्रहकर्तृत्वाल्लयभोगाधिकारवान् । २७५
त्रिविधः कृत्यभेदेन कथितो नामभेदतः ॥

( ५ )

[3]शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः ।

( ६ )

[4]प्रकाशो व्यक्तिशब्देन मलशब्देन चावृतिः ।
व्यक्तिर्याऽणोर्मलः प्रोक्तः स्फुटं दीपान्धकारवत् ॥

---

१. श० र० सं०, पृ० १२ ।
२. श० र० सं०, पृ० २३ ।
३. श० र० सं०, पृ० २५, ५० ।
४. श० र० सं०, पृ० ३८ ।

( ७ )

[1]गुरुर्यथाऽग्रतः शिष्यान् सुप्तान् दण्डेन बोधयेत् । २८०
शिवेऽपि मोहनिद्रायां सुप्तांश्छक्त्या प्रबोधयेत् ॥

( ८ )

[2]अनादिमलमुक्तत्वात् सर्वज्ञोऽसौ ततः शिवः ।

( ९ )

[3]विषसंबन्धिनी शक्तिर्यथा मन्त्रैर्निरुद्ध्यते ।
तदा न तद्विषं क्षीणमेवं पुंसो मलक्षयः ॥

( १० )

[4]शिवतत्त्वं कथं शून्यं तच्छून्यं नाक्षगोचरः । २८५
प्रत्यक्षं चाक्षविज्ञानं तदतीतं न किञ्चन ॥

( ११ )

[5]माया हेया शिवो ग्राह्यो ग्राहकः पुरुषः स्मृतः ।
मायाधर्मः शिवः शून्यः.................. ॥

( १२ )

[6]अतीन्द्रियं च यद्वस्तु तत्राण्डानुभवो न किम् ।
अनुभावो मनोऽध्यक्षः प्रसिद्धः क्षुद्यथा च तृट् ॥ २९०

---

१. श० र० सं०, पृ० ७२ ।
२. श० र० सं०, पृ० ७६ ।
३. श० र० सं०, पृ० ८९ ।
४. त० आ० वि० १ । ७५; पृ० ११६ ।
५. त० आ० वि० १ । ७५; पृ० ११६ ।
६. त० आ० वि० १ । ७५; पृ० ११६ ।

( १३ )

[1]अनुभावो विकल्पोत्थो विकल्पो मानसः स च ।
समनस्कं च तज्ज्ञेयमनस्कमरूपकम् ॥
अज्ञात्वा दैशिकस्तत्त्वं कथं दीक्षां करोत्यसौ ।
ज्ञेयः सर्वात्मनैवार्थः स ज्ञेयो नैव सर्वथा ॥

( १४ )

[2]संकल्पकमत्र मनः······ ··· ······ । २९५

( १५ )

[3]क्षुधाद्यनुभवो यत्र विकल्पस्तत्र नो भवेत् ।
वस्त्वाश्रयो विकल्पोऽपि तद्वस्तु घटवन्न च ॥
विकल्पो मानसः सूक्ष्मः शून्यशक्तिलयं गतः ।
तद्गतस्त्वन्यविच्छिन्नस्तेनासौ वित्तवर्जितः ॥
ज्ञानं चात्मेन्द्रियाश्लेषात् कर्ता ह्यात्मा मनः क्रिया । ३००
शिवः साध्योऽत्र मन्तव्यो विभुरप्येकधर्मतः ॥

( १६ )

[4]प्रत्यक्षेण यथा वृक्षो रूपमात्राद् विगृह्यते ।
रसादयो गृहीता नो तथेशो ज्ञानशक्तितः ॥
गृह्यते तत्त्वभावेन वस्तुभावविवर्जनात् ।

( १७ )

[5]बिन्दुर्नादस्तथा शक्तिः शून्यत्वे परिकल्पिताः । ३०५
चेतसः स्थितिहेत्वर्थं पुनर्नित्यं स्थिरं भवेत् ॥

---

१. त० आ० वि० १ । ७५; पृ० ११७
२. त० आ० वि० १ । ७५; पृ० ११७
३. त० आ० वि० १ । ७६; पृ० ११९
४. त० आ० वि० १ । ७७; पृ० १२१
५. त० आ० वि० १ । ७७; पृ० १२१

अतीन्द्रियः सुसूक्ष्मत्वात् सूक्ष्मा शक्तिः स तद्गतः ।
ज्ञानशक्तिर्मता सापि तज्ज्ञानाज्ज्ञात एव सः ॥

( १८ )

[1]शून्यमेवंविधं ज्ञेयं गुरुतः शास्त्रतः स्वतः ।

( १९ )

[2]समे कर्मणि संजाते तत्कालं योग्यतावशात् । ३१०
तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ॥
सर्वज्ञः स शिवो यद्वत्किञ्चिज्ज्ञत्वविवर्जितः ।

## कुब्जिकातन्त्रम्

( १ )

[3]शिवस्य निष्प्रपञ्चस्य परमार्थशरीरिणः ।
चिदुल्लासात् परा जाता पञ्चानां मातृरूपिणी ॥
अन्वयानां मार्गयोगात् सैका षोढा प्रजायते । ३१५
परा चेच्छा तथा ज्ञाना क्रिया कुण्डलिनीति च ॥
मातृका चाष्टधा प्रोक्ता पराभेदास्ततः स्मृताः ।
कुण्डलिनीमातृकाभ्यां च षोढा भिन्नं मयूखकम् ॥
नानाविधं सुविततं तन्त्रमेतत् षडन्वयम् ।
उत्पन्नं शाम्भवं पश्चाज्जगदेतच्चराचरम् ॥ ३२०

---

१. त० आ० वि० ४ । ४१; पृ० ४६
२. त० आ० वि० १३ । २८३–८४; पृ० १७३
३. सौ० लो० सौभा० श्लो० १४

( २ )

[1]आदौ परा चतुर्धा स्याद् द्वितीयेच्छा च पञ्चधा ।
तृतीया वेदधीज्ञाना चतुर्थी सप्तधा क्रिया ॥
पञ्चमी कुण्डलीद्विर्धिः षष्ठी स्यान्मातृकाष्टधा ।
परातोऽजायतेच्छा हि सा च व्योमपतिः स्मृता ॥
षट्त्रिंशन्नायिकाः प्रोक्ताः कण्ठस्थानसमाश्रिताः । ३२५
इच्छातो जायते ज्ञाना सा च वायोरधीश्वरा ॥
सप्तविंशतिरश्मीनां पतिः साऽनाहताश्रया ।
ज्ञानातोऽभूत्क्रिया व्यक्ता सा च वह्नीश्वरा मता ॥
एकत्रिंशद्रश्मिपतिः स्वाधिष्ठानं समाश्रिता ।
क्रियातः कुण्डली व्यक्ता सा स्यात् सलिलनायिका ॥ ३३०
सप्तविंशतिरश्मीनां मणिपूरं समाश्रिता ।
कुण्डल्या मातृका जाता सा क्षितेरीश्वरी मता ॥
अष्टाविंशतिरश्मीनामक्षीवाधारमाश्रिता ।
शिवशक्तिविभागेन द्विविधा शाम्भवाज्ञया ॥
षष्ट्युत्तरं तु त्रिशतमेवं शम्भुमरीचयः । ३३५
परादिशक्तिभिः षड्भिर्नायकैः सहिताः पुनः ॥
द्विसप्तत्यधिकं त्रीणि शतान्याहुर्मनीषिणः ।
एषां स्मरणमात्रेण जीवन्मुक्तो महीं चरेत् ॥
सर्वेषां स्मरणाशक्तः षट्सु चैकमपि स्मरेत् ।
एतेषां स्मृतितो लोकः पापहा पूजनात् पुनः ॥ ३४०
लक्ष्मीवान् ध्यानतो जीवन्मुक्तो रश्मिकुले वसेत् ।

( ३ )

[2]यल्लाभान्नापरो लाभो यत् सुखान्नापरं सुखम् ।
यज्ज्ञानान्नापरं ज्ञानं तद् ब्रह्मेत्यवधारय ॥

---

१. सौ० ल० सौभा०, श्लो० १४ । २. श्रीत० चि०, पृ० ८ ।

यद्दृश्यान्नापरं दृश्यं यद्दृष्ट्वा न पुनर्भवः ।
तिर्यगूर्ध्वमधःपूर्णं सच्चिदानन्दमव्ययम् ॥ ३४५
अनन्तं नित्यमेकं यत्तद् ब्रह्मेत्यवधारय ।

## कुब्जिकामतम्

(१)

[1]भोग्यभोक्तृषु भावेषु मिषत्स्वनिमिषत्सु च ।
देशकालदिगाख्येषु स्थूलसूक्ष्मपरेषु च ॥
सत्तास्फुरणकव्याप्ता गतिभक्षणयोगतः ।
कर्मणा चरणाख्येयं न तु पादतया प्रिये ॥ ३५०

(२)

[2]सितो वामेऽरुणो दक्षे वराभयकरो गुरुः ।
प्रेताम्बुजगतोऽङ्कस्थरक्तशक्तिस्त्रिलोचनः ॥
पञ्चमुण्डधरः स्रग्वी हृदि ध्येयः स्मिताननः ।

(३)

[3]कुण्डिकामतं घुटिकासिद्धिहेतुः । सोऽपि वामाचार-
प्रधान एव । ३५५

---

१. म० म० प०, पृ० ४
२. म० म० प०, पृ० ४
३. सौ० ल० लक्ष्मी०, पृ० १३९

# कुलगुह्वरः

( १ )

[1]इदानीं कामतत्त्वं तु विषतत्त्वं परं तथा ।
कथ्यते तव सुश्रोणि भक्तिस्नेहाद् विशेषतः ॥

इत्युपक्रम्य—

यत्तदक्षरम् ......... .... ..... ... ।

इत्यादि चाभिधाय—

तत्र चित्तं नियुञ्जीत साधकेन महात्मना ।
देवकिन्नरगन्धर्वसिद्धविद्याधराङ्गनाः ॥ ३६०
यक्षकन्यास्तथा नाग्यः पिशाच्यः सुरयोषितः ।
वशमायान्ति सुभगे नरनारीषु का कथा ॥

( २ )

[2]नास्योच्चारयिता कश्चित् प्रतिहन्ता न विद्यते ।
स्वयमुच्चरते देवः प्राणिनामुरसि स्थितः ॥

( ३ )

[3]नादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम् । ३६५

( ४ )

[4]सुसूक्ष्मो व्यापकः शुद्धः प्राणतत्त्वस्य वाचकः ॥

( ५ )

[5]विसर्ग एव सुस्पष्टमाउयानत्वमुपागतः ।

---

१. त० आ० वि० ३ । १४७; पृ० १४८-१४९
२. त० आ० वि० ३ । १४७; पृ० १४९
३. त० आ० वि० ३ । १४७; पृ० १४९
४. त० आ० वि० ३ । १४७; पृ० १४९
५. त० आ० वि० ३ । १४७; पृ० १५०

( ६ )

[1]यत्तदक्षरमक्षोभ्यं प्रियाकण्ठोदितं परम् ।
सहजं नाद इत्युक्तं तत्त्वं नित्योदितो जपः ॥

( ७ )

[2]नित्यानन्दरसास्वादाद् हाहेति गलकोदरे । ३७०
स्वयंभूः सुखदोच्चारः कामतत्त्वस्य वेदकः ॥

( ८ )

[3]अतिसौख्यसमावेशविवशीकृतचेतसः ।
अविच्छिन्नं जपन्त्येनमङ्गनासङ्गमोत्सवे ॥
अत्रासक्तधियो यान्ति योगं योगीश्वराः परम् ।
स शिरोरहितः कामः कामिनीहृदयालयः ॥ ३७५
नेत्रारूढेन तेनाथ शक्तिदृष्टिं समाहरेत् ।
क्षोभयेन्नात्र संदेहो दृप्तामपि वरस्त्रियम् ॥

( ९ )

[4]यदा शून्यं निरालम्बं ध्यानधारणवर्जितम् ।
सर्ववर्णधरं शान्तं सर्ववर्णविवर्जितम् ॥
चिन्मात्रं केवलं शुद्धं विषनिर्वाहकारकम् । ३८०
न विषं न ग्रहः पापं न यक्षो न च राक्षसः ॥
न पिशाचादिकं किञ्चिन्नायं नाहं विभावयेत् ।
केवलं भावमात्रेण........................ ॥

—:०:—

१. त० आ० वि० ३ । १४७; पृ० १५१
२. त० आ० वि० ३ । १४७; पृ० १५१
३. त० आ० वि० ३ । १४७; पृ० १५१
४. त० आ० वि० ३ । १७३-१७४; पृ० १७३

## कुलचूडामणिः

[1]एकं सृष्टिमयं बीजमेका मुद्रा च खेचरी।
द्वावेतौ यस्य जायेते सोऽतिशान्तपदे स्थितः॥ ३८५

—:०:—

## कुलपञ्चाशिका

[2]अव्यक्तलिङ्गिनं दृष्ट्वा संभाषन्ते मरीचयः।
लिङ्गिनं नोपसर्पन्ति अतिगुप्ततरा यतः॥

—:०:—

## कुलयुक्तिः

(१)

[3]प्राणिनां पतनं येन तेनैवोत्पतनं स्मृतम्।
अज्ञस्तु बद्ध्यते येन ज्ञाता तेनैव मुच्यते॥

(२)

[4]वेदान्ते वैष्णवे शैवे सौरे बौद्धेऽन्यतोऽपि च। ३९०
एक एव परः स्वात्मा ज्ञाता ज्ञेयं महेश्वरी॥

(३)

[5]आत्मा चैवात्मना ज्ञातो यदा भवति साधकैः।
तदा विस्मयमात्मा वै आत्मन्येव प्रपश्यति॥

१. शि० वि०, पृ० ५८
२. शि० वि०, पृ० ११२
३. स्प० प्र०, पृ० ५
४. स्प० प्र०, पृ० ११
५. शि० वि०, पृ० ३०

## कुलरत्नमाला

[1]यदा गुरुवरः सम्यक् कथयेत् तत्र संशयः।
मुक्तस्तेनैव कालेन यन्त्रस्तिष्ठति केवलम्॥ ३९५
किं पुनश्चैकतानस्तु परे ब्रह्मणि यः सुधीः।
क्षणमात्रस्थितो योगी स मुक्तो मोचयेत् प्रजाः॥

## कुलसारः

[2]अहो तत्त्वस्य माहात्म्यं ज्ञातमात्रस्य सुन्दरि।
श्रोत्रान्तरं तु संप्राप्ते तत्क्षणादेव मुच्यते॥

## कुलाम्नायः

[3]मेढ्रस्याधः कुलो ज्ञेयो मध्ये तु विषसंज्ञितः। ४००
मूले तु शाक्तः कथितो बिन्दुनादप्रवर्तकः॥
अग्निसंज्ञस्ततश्चोर्ध्वमङ्गुलानां चतुष्टये।
नाभ्यधः पवनाधारो नाभावेव घटाभिधः॥

## क्रमकेलिः

(१)

[4]अत एव ये निर्विमर्शं तुर्यातीतमिच्छन्ति, ते निरुपदेशा एव।

---

१. शि० वि०, पृ० १३५
२. शि० वि०, पृ० १३६
३. वि० भै० वि०, श्लो० ६८
४. म० म० प०, पृ० १०६

( २ )

[1]सेयमेवंविधा भगवती संविद्देव्येव मन्त्रः । ४०५

( ३ )

[2]तद्विवर्तः स्मृतो रश्मिपुञ्जश्चक्रेशिपूर्वकः ।

( ४ )

[3]वामदक्षिणतन्त्रादिष्वप्येतन्मयमेव सर्वं निर्वहतीति मन्तव्यम् ।

( ५ )

[4]यश्चायमेवंविधार्थमथनप्रगल्भो भगवान्, अत एव सर्वपर्यन्तप्रतिष्ठास्थानरूपो यः कुलेश्वरः, स एव यतः स्वशक्तिं ४१० निर्मथ्य सृष्ट्यादिकारी, अत एवंविधं श्रीमन्थानं भैरवं नमामीति संबन्धः ।

( ६ )

[5]वन्दनं हि तदनुप्रवेशः ।

## क्रमवासना

( १ )

[6]संवित्सतत्त्वनैर्मल्यसिद्धये शोषणादिकम् ।
विकल्पसार्वभौमस्य शरीरस्याश्रयाम्यहम् ॥ ४१५

१. म० म० प०, पृ० १२७
२. म० म० प०, पृ० १५६
३. म० म० प०, पृ० १७८
४. म० म० प०, पृ० १७९
५. म० म० प०, पृ० १९२
६. म० म० प०, पृ० ११५

( २ )

[1]कारणात्मपरामृष्टकार्यभूताङ्गुलिस्थितिम् ।
करोमि चिन्मयीं शुद्धिं करयोः परिशोधनीम् ॥
सर्वज्ञत्वादिशक्तीनां सतीनामात्मनि प्रभौ ।
उन्मज्जनं भावयामि षडङ्गविधियोगतः ॥

## क्रमसद्भावः

( १ )

[2]षोडशातः समासेन शृणुष्वेकमना हर । ४२०
( इत्यादि )--
सा सत्ता लीयते यत्र काली द्व्यष्टकला स्मृता ॥

( २ )

[3]इदं सर्वमसर्वं यत्संहारान्तं तु नित्यशः ।
कुटिलेक्षणरेखान्तग्रस्तमस्तमितं च यत् ॥
ततो बोधरसाविष्टा स्पन्दमाना निराकुला ।
दीधितीनां सहस्रं यद्वमेच्च पिबते भृशम् ॥ ४२५
सा कला लीयते यस्यां रुद्रकालीति सा स्मृता ।

( ३ )

[4]गमागमसुगम्यस्था महाबोधावलोकिनी ।
मायामलविनिर्मुक्ता विज्ञानामृतनन्दिनी ॥
सर्वलोकस्य कल्याणी रुद्रा रुद्रसुखप्रदा ।
यत्रैव शाम्यति कला रुद्रकालीति सा स्मृता ॥ ४३०
भेदस्य द्रावणाद् भद्रा भद्रसिद्धिकरीति या ।

---

१. म० म० प०, पृ० ११७
२. त० आ० वि० ४ । १२७; पृ० १३६
३. त० आ० वि० ४ । १७३; पृ० १९०
४. त० आ० वि० ४ । १५८; पृ० १७३

( ४ )

[1]कालोत्थिता महादेव सानन्दानन्दिनी शिवा ।
चिद्घना युग्ममध्यस्था अक्षराक्षरगोचरा ॥
अकुला कलयेन्नित्या कालकाली निराकुला ।
सा कला लीयते यस्यां सृष्टिकाली तु सा स्मृता ॥ ४३५

( इत्याद्युपक्रम्य )—

क्रमत्रयाणां यच्चक्रं घोरघोरतरं महत् ।
कालरूपं मरीच्याद्यं त्वाष्ट्रं कल्पान्तकान्तगम् ॥
आचरेत्तु महाचारचातुर्येणैव तत्र च ।
या कला घोरघोरोग्रा तस्याः सा तुर्यगा शिवा ॥
महाभैरवघोरस्य चण्डरूपस्य सर्वतः । ४४०
ग्रसते या महाकाली द्व्यष्टका कालनाशिनी ॥
सप्तादशी तु सा काली विद्धि सर्वार्थकारिणी ।

( ५ )

[2]गोपनीयानि नामानि चोरेभ्यो द्रविणं यथा ।
गोपनात् पालयन्त्येव मूर्तयस्तु महार्थतः ॥

( ६ )

[3]ज्ञानं सृष्टिं विजानीयात् स्थितिर्मन्त्रः प्रकीर्तितः । ४४५
संहारं तु महाकालमेलापं परमं विदुः ॥
अनाख्यं शक्तिरूपं तु भासाख्यं शम्भुरूपकम् ।
पञ्चप्रकारमेतद्धि विज्ञेयं तत्त्वदर्शिभिः ॥

---

१. त० आ० वि० ४ । १५८; पृ० १७३
२. म० म० प०, पृ० ८८
३. म० म० प०, पृ० ९७

(७)

[1]तया व्याप्तमिदं विश्वं त्रैलोक्यं सचराचरम् ।

(८)

[2]तेषां मध्यात् क्रमेणैव आदौ पूज्यस्तु कः क्रमः । ४५०
तन्मे कथय सुश्रोणि विस्तरेण यथाविधि ॥

(९)

[3]पुरा यत् कथितं देव पञ्चपादमहाक्रमम् ।
तेषां तु क्रमराजानां सृष्टिरूपोऽग्रजः सदा ॥
ततस्तु स्थितिसंहारमनाख्यं च ततः परम् ।
भासाख्यं च ततः पश्चात् पूजयेदक्रमक्रमम् ॥ ४५५

## क्रमसिद्धिः

(१)

[4]व्योमवामेश्वरी संज्ञा नादभूमिश्च खेचरी ।
आनन्ददिक्चरी संज्ञा गोचरी मन्त्रभूमिका ॥
मन्त्राणां द्रव्यरूपत्वादावलिर्भूचरी तथा ।

(२)

[5]संवित्क्रममिमं देव शृणु वक्ष्यामि सुन्दर ।
सृष्टिं स्थितिं च संहारानाख्याभासास्वरूपकम् ॥ ४६०
ज्ञानं मान्त्रं च मेलापं शाक्तं शाम्भवसंयुतम् ।

---

१. म० म० प०, पृ० १०१
२. म० म० प०, पृ० १०८
३. म० म० प०, पृ० १०८
४. म० म० प०, पृ० ८९
५. म० म० प०, पृ० ९७

( ३ )

[1]दोहे व्याप्तं गवि क्षीरं स्तनाभ्यां प्रसृतं यथा ।
सर्वगा व्यापिनी सूक्ष्मा एकस्मिन् प्रसृता शिवा ॥

( ४ )

[2]क्रकारः क्रोधरूपस्तु मकारो मङ्गलो भवेत् ।
क्रोधे तु मङ्गलं कुर्यात् क्रमः कालक्रमो भवेत् ॥ ४६५
गुर्वायत्तं क्रमज्ञानमाज्ञासिद्धिकरं परम् ।
क्रमज्ञानान्महादेवि त्रैलोक्यं कवलीकृतम् ॥

## क्रमसूत्रम्

( १ )

[3]बाह्यादन्तःप्रवेशः, आभ्यन्तराद्वा बाह्यस्वरूपानुप्रवेशः ।

( २ )

[4]यथा वह्निरुद्बोधितो दाह्यं दहति तथा विषयपाशान् भक्षयेत् ।

( ३ )

[5]क्रममुद्रयाऽन्तःस्वरूपया बहिर्मुखः समाविष्टो भवति साधकः । ४७०
तत्रादौ बाह्यादन्तःप्रवेशः, आभ्यन्तराद् बाह्यस्वरूपे प्रवेश आवेश-वशाज्जायत इति सबाह्याभ्यन्तरोऽयं मुद्राक्रमः ।

---

१. म० म० प०, पृ० १०१
२. म० म० प०, पृ० १०९
३. म० म० प०, पृ० १६६
४, प्र० हृ०, सू० १५
५. प्र० हृ०, सू० १९

## क्रमस्तुतिः

( १ )

[1]ईशत्वभावकलुषाः कति नाम सन्ति
ब्रह्मादयः प्रतिदिनं प्रलयाभिभूताः ।
एकः स एव जननि स्थिरबुद्धिरास्ते ४७५
यः पादयोस्तव सकृत् प्रणतिं करोति ॥

( २ )

[2]ह्रीङ्कारमेव तव नाम गृणन्ति वेदाः
मातस्त्रिकोणनिलये त्रिपुरे त्रियोने ॥



## क्रमस्तोत्रम्

( १ )

[3]कौलार्णवानन्दघनोर्मिरूपा-
मुन्मेषमेषोभयभाजमन्तः । ४८०
निलीयते नीलकुलालये य-
स्तां सृष्टिकालीं सततं नमामि ॥

( २ )

[4]महाविनोदार्पितमातृचक्र-
वीरेन्द्रकासृग्रसपानसक्ताम् ।
रक्तीकृतां च प्रलयात्यये तां ४८५
नमामि विश्वाकृतिरक्तकालीम् ॥

---

१. सौ० ल० सौभा०, श्लो० ४

२. सौ० ल० सौभा०, श्लो० ३२

३. त० आ० वि० ४ । १४८; पृ० १५८

४. त० आ० वि० ४ । १४९; पृ० १६०–१६१

( ३ )

[1]वाजिद्वयस्वीकृतवातचक्र-<br>
प्रक्रान्तसंघट्टगमागमस्थाम् ।<br>
शुचिर्ययाऽस्तंगमितोर्चिषा तां<br>
शान्तां नमामि स्थितिनाशकालीम् ॥ ४९०

( ४ )

[2]सर्वार्थसंकर्षणसंयमस्य<br>
यमस्य यन्तुर्जगतो यमाय ।<br>
वपुर्महाग्रासविलासरागात्<br>
संकर्षयन्तीं प्रणमामि कालीम् ॥

( ५ )

[3]उन्मन्यनन्ता निखिलार्थगर्भा ४९५<br>
या भावसंहारनिमेषमेति ।<br>
सदोदिता सत्युदयाय शून्यां<br>
संहारकालीं मुदितां नमामि ॥

( ६ )

[4]ममेत्यहङ्कारकलाकलाप-<br>
विस्फारहर्षोद्धतगर्वमृत्युः । ५००<br>
ग्रस्तो यया घस्मरसंविदं तां<br>
नमाम्यकालोदितमृत्युकालीम् ॥

---

१. त० आ० वि० ४ । १५०; पृ० १६३

२. त० आ० वि० ४ । १५१; पृ० १६५

३. त० आ० वि० ४ । १५२; पृ० १६७

४. त० वि० मा० ४ । १५४; पृ० १६९

( ७ )

[1]विश्वं महाकल्पविरामकल्प-
भवान्तभीमभ्रुकुटिभ्रमन्त्या ।
याऽङ्गनात्यनन्तप्रभवार्चिषा तां ५०५
नमामि भद्रां शुभभद्रकालीम् ॥

( ८ )

[2]मार्तण्डमापीतपतङ्गचक्रं
पतङ्गवत् कालकलेन्धनाय ।
करोति या विश्वरसान्तकां तां
मार्तण्डकालीं सततं प्रणौमि ॥ ५१०

( ९ )

[3]अस्तोदितद्वादशभानुभाजि
यस्यां गता भर्गशिखा शिखेव ।
प्रशान्तधाम्नि द्युतिनाशमेति
तां नौम्यनन्तां परमार्ककालीम् ॥

( १० )

[4]कालक्रमाक्रान्तदिनेशचक्र- ५१५
क्रोडीकृतान्ताग्निकलाप उग्रः ।
कालाग्निरुद्रो लयमेति यस्यां
तां नौमि कालानलरुद्रकालीम् ॥

---

१. त० आ० वि० ४ । १५८; पृ० १७३
२. त० आ० वि० ४ । १६३; पृ० १७८
३. त० आ० वि० ४ । १६७; पृ० १८१
४. त० आ० वि० ४ । १६८; पृ० १८३

( ११ )

[1]नक्तं महाभूतलये श्मशाने
दिक्खेचरीचक्रगणेन साकम् । ५२०
कालीं महाकालमलं ग्रसन्तीं
वन्दे ह्यचिन्त्यामनिलानलाभाम् ॥

( १२ )

[2]क्रमत्रयत्वाष्ट्रमरीचिचक्र-
संचारचातुर्यंतुरीयसत्ताम् ।
वन्दे महाभैरवघोरचण्ड- ५२५
कालीं कलाकाशशशाङ्ककान्तिम् ॥

( १३ )

[3]या सा जगद् ध्वंसयते समग्रं
मृत्योर्वपुर्ग्रासयतीति विष्वक् ।
धामाग्निरूपीयसहस्रदीप्तां
तां नौमि कालानलरुद्रकालीम् ॥ ५३०

( १४ )

[4]कालानलाद्व्योमकलावसानं
चिन्त्यं जगद् ग्रासकलालयेन ।
चक्रं महासंहृतिरूपमुग्रं
गतं चिदाकाशपदस्थमित्थम् ॥

---

१. त० आ० वि० ४ । १७०; पृ० १८५
२. त० आ० वि० ४ । १७१-७२; पृ० १८८
३. त० आ० वि० ४ । १७३; पृ० २०२
४. त० आ० वि० ४ । १९१; पृ० २२३

# क्रमोदयः

( १ )

[1]प्रविष्टेऽन्तः सिन्धुरसे भेदनिर्हरणात्मके । ५३५
स्थैर्यमेति चमत्कारो विना विषयसङ्गतिम् ॥

( २ )

[2]रागो माया कलाऽविद्या नियतिः काल एव च ।
पञ्चवृत्त्याश्रयाः सर्वे पाशाश्चेति प्रकीर्तिताः ॥

( ३ )

[3]स्त्रियः सर्वेषु वर्णेषु योगिन्यः स्युर्न संशयः ।
देहवद् योनिशुद्धिस्तु आत्मवल्लिङ्गशोधनम् ॥ ५४०
योनौ नवाक्षरीं न्यस्य लिङ्गे सप्तदशाक्षरीम् ।
गुरुचक्रस्य पूजार्थं कुर्याद् योगिनिमेलनम् ॥
नवाक्षर्या तु मन्त्रेण स्थापयेल्लिङ्गपीठवत् ।
शिवशक्त्यात्मभावेन पुरुषो मन्थकः स्मृतः ॥
मन्थयेदात्मनः शक्तिं मधुवच्छुक्लशोणितम् । ५४५

# क्रियाकरणमण्डनम्

[4]निर्वी ( निर्वि ) शेषकृता
तूपाधिकरणाचार्यस्थितेनाऽमुना ।
साधारा तु चतुर्विधा
सह विना बीजाधिकारक्रमात् ॥

---

१. यो० दी०, पृ० २६६, २८३
२. म० म० प०, पृ० ५०
३. म० म० प०, पृ० ८७
४. श० र० सं०, पृ० ६

द्वेधाद्या शिवलोकधर्मभजनात् ५५०
तत्रादिमा भौतिकी ।
नैष्ठिक्यप्यपरा तु जातिचरिता
त्यागात् कृता संस्क्रिया ॥
निर्बीजा द्विविधा नृणा-
ममृतदा सद्यश्चिरेणापि या । ५५५
नित्याद्याश्रयवर्जनात् तु
सदधिकाराधिकारोज्झिता ॥
साधारेति चतुर्विधा पुनरियं
ज्ञानक्रियाभ्यां द्विधा ।
ज्ञानी ज्ञानवतां क्रिया त्वविदुषां ५६०
या चाक्षुषी पूर्विका ॥

—:०:—

## चन्द्रज्ञानम्

( १ )

[१]येन प्रबुद्धभावेन भुञ्जानो विषयान् स्वयम् ।
न याति पाशवं भावं ज्ञानचन्द्रः सः कीर्तितः ॥

( २ )

[२]अध ऊर्ध्वं दिशः सर्वा भूमिरापोऽनलस्तथा ।
वायुश्च खं मनो बुद्धिरहङ्कारश्च ये गुणाः ॥ ५६५
सर्वं शून्यं निरालम्बं तत्र सर्वं प्रतिष्ठितम् ।
यत् किञ्चित् सकलं भावरूपं तन्त्रेषु वर्णितम् ॥
तदसारतरं चन्द्रमायास्वप्नोपमं स्थितम् ।

१. म० म० प०, पृ० १६६
२. वि० भै० वि०, श्लो० १३४

भ्रान्तिं त्यजस्व वै पुत्र सर्वं शून्ये प्रतिष्ठितम् ॥
शून्यात् प्रवर्तते शक्तिः शक्तेर्वर्णाः प्रजज्ञिरे । ५७०
वर्णेभ्यश्च तथा मन्त्रा मन्त्रेभ्यः सृष्टिरव्यया ॥
तस्मात् शून्यं जगद् ध्यायेद्यन्न नश्येत् कदाचन ।

( ३ )

[1]यथेन्दुः पुष्पसंकाशः समन्तादवभासते ।
आह्लादनसमूहेन जगदाह्लादयेत् क्षणात् ॥
तद्वद् देवि महायोगी यदा पर्यटते महीम् । ५७५
ज्ञानेन्दुकिरणैः सर्वैर्जगच्चित्रं समस्तकम् ॥
आह्लादयेत् समन्तात्तदवीच्यादिशिवान्तकम् ।

—:०:—

## चन्द्रज्ञानविद्या

( १ )

[2]चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा । ५८०
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ॥
बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ।
चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात् ॥
त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहं भुवनाश्रके ॥ ५८५

---

१. शि० वि०, पृ० २३
२. सौ० ल० लक्ष्मी०, पृ० ७१–७२

शैवानामपि शाक्तानां चक्राणां च परस्परम् ।
अविनाभावसंबन्धं यो जानाति स चक्रवित् ॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
मनुकोणं चतुष्कोणं कोणचक्राणि षट् क्रमात् ॥
मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम् । ५९०
अनाहतं विशुद्ध्याख्यमाज्ञाचक्रं विदुर्बुधाः ॥
तत्राधारस्वरूपाणि कोणचक्राणि पार्वति ।
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः शिवः स्मृतः ॥
अविनाभावसंबन्धस्तस्माद् बिन्दुत्रिकोणयोः ।

( २ )

[1]मन्वश्रद्विदशाराष्टकोणवृत्तचतुष्टयम् । ५९५
अष्टाविंशतिमर्माणि चतुर्विंशतिसंधयः ॥

( ३ )

[2]साधु साधु महाभागे पृष्टं त्रैलोक्यसुन्दरि ।
गुह्याद् गुह्यतमं ज्ञानं न कुत्रापि प्रकाशितम् ॥
कलाविद्या पराशक्तेः श्रीचक्राकाररूपिणी ।
तन्मध्ये बैन्दवस्थानं तत्रास्ते परमेश्वरी ॥ ६००
सदाशिवेन संपृक्ता सर्वतत्त्वातिगा सती ।
चक्रं त्रिपुरसुन्दर्याः ब्रह्माण्डाकारमीश्वरी ॥
पञ्चभूतात्मकं चैव तन्मात्रात्मकमेव च ।
इन्द्रियात्मकमेवं च मनस्तत्त्वात्मकं तथा ॥
मायादितत्त्वरूपं च तत्त्वातीतं च बैन्दवम् । ६०५
बैन्दवे जगदुत्पत्तिस्थितिसंहारकारिणी ॥
सदाशिवेन संपृक्ता तत्त्वातीता महेश्वरी ।
ज्योतीरूपा पराकारा यस्या देहोद्भवाः शिवे ॥

---

१. सौ० ल० लक्ष्मी०, पृ० ८२

२. सौ० ल० लक्ष्मी०, पृ० १००-१०१

किरणाश्च सहस्रं च द्विसहस्रं च लक्षकम् ।
कोटिरर्बुदमेतेषां परा संख्या न विद्यते ॥ ६१०
तामेवानुप्रविश्यैव भाति लोकं चराचरम् ।
यस्या देव्या महेशानि भासा सर्वं विभासते ॥
तद्भासा रहितं किञ्चिन्न च यच्च प्रकाशते ।
तस्याश्च शिवशक्तेश्च चिद्रूपायाश्रितं विना ॥
आन्ध्यमापद्यते नूनं जगदेतच्चराचरम् । ६१५
तेषामनन्तकोटीनां मयूखानां महेश्वरी ॥
मध्ये षष्ट्युत्तरं तेऽमी त्रिशतं किरणाः शिवे ।
ब्रह्माण्डं व्यश्नुवानास्ते सोमसूर्यानलात्मना ॥
अग्नेरष्टोत्तरशतं षोडशोत्तरकं रवेः ।
षट्त्रिंशदुत्तरशतं चन्द्रस्य किरणाः शिवे ॥ ६२०
ब्रह्माण्डं भासयन्तस्ते पिण्डाण्डमपि शाङ्करि ।
दिवा सूर्यस्तथा रात्रौ सोमो वह्निश्च संध्ययोः ॥
प्रकाशयन्तः कालांस्ते तस्मात् कालात्मकास्त्रयः ।
षष्ट्युत्तरं च त्रिशतं दिनान्येव च हायनम् ॥
हायनात्मा महादेवः प्रजापतिरिति श्रुतिः । ६२५
प्रजापतिर्लोककर्ता मरीचिप्रमुखान् मुनीन् ॥
सृजत्येते लोकपालान् ते सर्वे लोकरक्षकाः ।
संहारश्च हरायत्त उत्पत्तिर्भवनिर्मिता ॥
रक्षा तु मृडसंलग्ना सृष्टिस्थितिलये शिवः ।
नियुक्तः परमेशान्या जगदेव प्रवर्तते ॥ ६३०

( ४ )

[1]सूर्यमण्डलमध्यस्थां देवीं त्रिपुरसुन्दरीम् ।
पाशाङ्कुशधनुर्बाणान् धारयन्तीं प्रपूजयेत् ॥

---

१. सौ० ल० लक्ष्मी०, पृ० १२८

(५)

[1]चन्द्रज्ञानविद्यायां षोडशनित्याप्रतिपादनम् । नित्याप्रतिपादकत्वेऽपि कापालिकमतान्तःपातित्वाद् हेयमेव । उपादेयचन्द्रज्ञानविद्या चतुष्षष्टितन्त्रातीता । ६३५

—:०:—

## चरणसूत्रम्

[2]विद्येति मातृकापीठं तत् पार्थिवमुदाहृतम् ।
मण्डलं कुण्डलीपीठं तदाप्यं परिकीर्तितम् ॥
मन्त्रसंज्ञं क्रियापीठं तैजसं तत् प्रकीर्तितम् ।
ज्ञानपीठं तु मुद्राख्यं तद् वायव्यं सुरेश्वरि ॥
परेच्छामुखतो व्योम पीठत्वेनेह नादृतम् । ६४०
तन्मूलस्योपचारस्य बाह्यस्याभावतः प्रिये ॥
चेष्टात्मको भवेद् वायुस्ततः स्यान्नतिरध्वरे ।
दीपः स्यात् तैजसस्तोयं चरुरिष्टो रसात्मकः ॥
पृथिव्या गन्धवत् पुष्पमुपचाराय पाद (ये ? योः) ।

—:०:—

## चिच्छक्तिसंस्तुतिः

[3]तदेवं त्वत्प्रवृत्त्या त्वन्निवृत्त्या चोदयेतरे । ६४५
जुषन्ते येन तत्त्वानि तान्यतः स्पन्द एव ते ॥
( वैसादृश्येऽपि कार्यस्यास्यात्र दृष्टान्तमाह यत् ) ।
ज्वलनाद् धूमोद्गतिरिव विविधाकृतिरम्बरे गता भाति ।
तद्वद् विष्णोः सृष्टिः स्वभावजा द्वैतरूपेयम् ॥

---

१. सौ० ल० लक्ष्मी०, पृ० १३८

२. म० म० प०, पृ० ९

३. स्प० प्र०, पृ० ६

प्राश्यानश्चिद्रसस्यौघः साकारत्वमुपागतः । ६५०
अवश्यायः प्रबोधार्के तूदिते स्वस्वभावभाक् ॥

---

## जयरथगुरुः

( १ )

[1]शश्वद्विश्वमनश्वरप्रकृतयो विश्वस्तचित्ता भृशं
ये विज्ञानतनूनपाति विततोन्मेषा वषट्कुर्वते ।
तेषां संततसर्वमेययजनक्रीडामहायज्वनां
नो मन्येऽवभृथक्षणः क्षणमपि क्षीणस्थितिर्लक्ष्यते ॥ ६५५

( २ )

[2]सर्वभावमयभावमण्डलं
विश्वशक्तिमयशक्तिबर्हिषि ।
जुह्वतो मम समोऽस्ति कोऽपरो
विश्वमेधमययज्ञयाजिनः ॥

---

## जयरथपरमगुरवः

[3]यो यस्य गुर्वादेशः स तस्य मोचकः । ६६०

---

१. त० आ० वि० ४ । २०२; पृ० २३३
२. त० आ० वि० ५ । ६६; पृ० ३७१
३. त० आ० वि० ४ । १७३; पृ० २०३

## जयाख्यसंहिता

( १ )

[1]निष्कम्पबोधसामान्यरूपो मात्रा पुरा स्वयम् ।
ये शब्दजनिता भावाः सूक्ष्मसूक्ष्मतराखिलाः ॥
सामान्यबोधशब्दस्य पश्यतस्त्वेकतां गताः ।
यदाऽभिमुखमायान्ति संकल्पाद्युत्थितस्य च ॥
शब्दरूपपदार्थस्य शब्दः स परमः स्मृतः । ६६५
संकल्पपद्वीरूढः स्फुरत्यन्तःस्थितः स्फुटम् ॥
पदार्थोपरमः शब्दो मध्यमं विद्धि तं मुने ।
चिद्वायुकरणोत्थासु प्रयत्नपदवीषु च ॥
वाच्यवाचकभावेनाभिव्यक्तः स्थूल उच्यते ।
दृश्यादृश्येषु भावेषु योऽभिव्यक्तिं प्रयाति च ॥ ६७०
स तु स्थूलतरश्चैव व्यवहारेऽखिले स्थितः ।

( २ )

[2]तत्त्वनिर्मुक्तदेहस्य केवलस्य चिदात्मनः ।
य उदेति महानन्दः सा शक्तिर्वैष्णवी परा ॥

( ३ )

[3]एकस्य मन्त्रनाथस्याप्यन्तर्बाह्योदितस्य च ।
यदैक्यं तं जपं विद्धि लक्षसंख्याधिकं मुने ॥ ६७५

( ४ )

[4]यस्माद् देवो जगन्नाथः कृत्वा मन्त्रमयीं तनुम् ।
मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥

---

१. स्प० प्र०, पृ० ९
२. स्प० प्र०, पृ० ११
३. स्प० प्र०, पृ० ३४
४. स्प० प्र०, पृ० ५४

# जाबालिसूत्राणि

( १ )

[१]द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धाऽपरिलुप्तचैतन्यस्वभावो जगदुत्पत्तिस्थितिलयैकहेतुर्भगवान् वासुदेव आत्मेति ॥

# ज्ञानगर्भस्तोत्रम्

[२]अनच्ककक्कृतायतिप्रसृतपार्श्वनाडीद्वय- ६८०
छिदो विधृतचेतसो हृदयपङ्कजस्योदरे ।
उदेति तव दारितान्धतमसः स विद्याङ्कुरो
य एष परमेशतां जनयितुं पशोरप्यलम् ॥

( २ )

[३]विहाय सकलाः क्रिया जननि मानसीः सर्वतो
विमुक्तकरणक्रियानुसृतिपारतन्त्र्योज्ज्वलम् । ६८५
स्थितैस्त्वदनुभावतः सपदि वेद्यते सा परा
दशा नृभिरतन्द्रितासमसुखामृतस्यन्दिनी ॥

( ३ )

[४]मयि स्थितमिदं जगत् सकलमेव सर्वत्र वा
स्थितोऽहमिति धारणाद्वितयभावनावेशतः ।
जगत्त्रितयनाथ तानतिचिरेण सम्प्राप्यते ६९०
नृभिस्तव सपर्यया दलितकिल्बिषोपप्लवैः ॥

१. स्प० प्र०, पृ० ३९
२. प्र० हृ०, सू० १८
३. शि० वि०, पृ० १०५-१०६; प्र० हृ०, सू० १८
४. स्प० प्र०, पृ० ४१

## ज्ञानतिलकः

(१)

[1]न दानैर्न तपोयज्ञैर्नियमैर्न व्रतैः शुभैः ।
न स्नानतीर्थसंघातैर्लभ्यते परमं पदम् ॥
नानेकैः तपसां व्रातैर्लभ्यते पुण्यसञ्चयैः ।
बध्नन्ति सर्वथात्मानं कोशकारं कृमिर्यथा ॥ ६९५

## ज्ञानदीपविमर्शिनी

[2]ओड्याणपीठमध्ये कदम्बवनान्तरश्रीमञ्चचतुष्पादके लं पृथिव्यधिपतये ब्रह्मणे नमः, वं अपामधिपतये विष्णवे नमः, रं तेजोधिपतये रुद्राय नमः, यं वाय्वधिपतये ईश्वरायः नमः । एतानभ्यर्च्य हं आकाशाधिपतये पञ्चवक्त्रसदाशिवमहाप्रेतासनाय नमः । ७००

## ज्ञानसंबोधः

(१)

[3]स्वभावादेकरूपापि नानात्वं प्रतिपद्यते ।
ज्ञानस्य शक्तिः सङ्कल्पैर्लक्ष्मीश्चिन्तामणेरिव ॥

(२)

[4]विश्वस्याश्रय आकाशं न विश्वं नभसो भवेत् ।
ज्ञानं नभ इवानन्तं ज्ञेयं विश्ववदल्पकम् ॥

---

१. श० र० सं०, पृ० ७०
२. यो० दी०, पृ० १६०
३. स्प० प्र०, पृ० ४
४. स्प० प्र०, पृ० १२

आकाशस्येव वाऽन्येन प्रतिबन्धो न केनचित् । ७०५
व्यापित्वात् तद्वदस्यापि ज्ञानस्याऽप्रतिबन्धता ॥

( ३ )

[1]यद्यपि स्वात्मशक्त्यैव गतिः साक्ष्यन्ययोर्द्वयोः ।
तथाप्येकः स्वयं याति द्वितीयोऽन्येन नीयते ॥
साक्षिवत् स्फीतबोधानां स्वातन्त्र्यं विषमेष्वपि ।
अन्धवन्मन्दबुद्धीनां पारतन्त्र्यं समेष्वपि ॥ ७१०

( ४ )

[2]ज्ञाता ज्ञेयं ज्ञानमिति ज्ञानस्यैव त्रिधा स्थितिः ।
ब्रह्मार्पणं ब्रह्महविरित्यत्रोक्तं तदेव यत् ॥

( ५ )

[3]सर्वः स एव व्यापित्वाद् ज्ञः स एव स्वभावतः ।
सर्वज्ञश्चेति सर्वज्ञः पुमानिव निरुद्धयते ॥

## ज्ञानामृतरसायनम्

[4]मात्रार्धमात्रात् परमं तदर्धाच्च परं परम् । ७१५
तत्त्वातीतं परं तत्त्वमभावं भावमाश्रितम् ॥

( तथा )—

अत्र प्रकाशमात्रं यत्स्थिते धामत्रये सति ।
उक्तं बिन्दुतया शास्त्रे शिवबिन्दुरिति स्मृतः ॥

१. स्प० प्र०, पृ० २९
२. स्प० प्र०, पृ० ३९
३. स्प० प्र०, पृ० ४५
४. वि० भै० वि०, श्लो० ९१

अनुत्तरं परं धाम तदेवाकुलमुच्यते ।
विसर्गस्तस्य नाथस्य कौलिकी शक्तिरुच्यते ॥ ७२०

## ज्ञानेन्दुकौमुदी

(१)

[1]यद्यथोपनतमेव पूर्णता-
मादधाति हृदयङ्गमत्वतः ।
तत् तथैव परमेश पूजने
योग्यमन्यदिह नास्ति लक्षणम् ॥

(२)

[2]स्वात्मानं हि विहाय चेतनममुं किं पूजयेयुर्जडम् । ७२५

## तत्त्वगर्भस्तोत्रम्

(१)

[3]यदा तु तेऽपि सुव्यक्तस्वसामर्थ्यगुणोज्ज्वलाः ।
भवेद् दृढतरादूरदारिता दार्ढ्यदीनता ।
तदा च तेषां सङ्कल्पः कल्पपादपतां व्रजेत् ॥

(२)

[4]परमार्थेन न ग्राह्यं ग्राहकं वा न किञ्चन ।
यस्माद्दृते तत् स्वाभासमस्वाभासमिवेक्ष्यते ॥ ७३०

१. म० म० प०, पृ० १२०
२. म० म० प०, पृ० १२१–१२२
३. शि० वि०, पृ० १२६
४. स्प० प्र०, पृ० १७

## तत्त्वयुक्तिः

( १ )

[1]येन येन हि बद्ध्यन्ते जन्तवो रौद्रकर्मणा ।
सोपायो न तु तेनैव मुच्यन्ते भवबन्धनात् ॥

( २ )

[2]विषयाधिपतिर्यो हि येन जानाति पार्वति ।
तस्य यो वेत्ति तत्त्वेन तेन ज्ञातं चराचरम् ॥

## तत्त्वरक्षाविधानम्

[3]अशक्तत्वान्निष्क्रियत्वान्न पुंसि न परे पदे ।       ७३५
शक्तौ नियोजयेन्मन्त्रं जपस्तु सफलो भवेत् ॥

## तत्त्वविचारः

[4]स्वस्वभावस्थिता भावाः सम्बध्यन्ते परस्परम् ।
भोग्यभोक्तृत्वभावेन न कदाचित् स्वभावतः ॥
द्रष्टाऽनुभविता स्मर्ता ग्राहको भोक्तृवेदकः ।
कर्तोपलब्धा संवेत्ता ज्ञातेति ज्ञानसंज्ञकाः ॥       ७४०

## तत्त्वविमर्शिनी

[5]इन्द्रेशानदिशोर्मध्ये स्थानमन्यत् प्रकीर्तितम् ।
नैरृताम्बुदिशोर्मध्ये स्थानमन्यत् प्रकीर्तितम् ॥

---

१. स्प० प्र०, पृ० ५
२. स्प० प्र०, पृ० ४४
३. स्प० प्र०, पृ० ३३
४. स्प० प्र०, पृ० ३९
५. यो० दी० पृ० २३१

## तत्त्वार्थचिन्तामणिः

( १ )

[१]प्राक् संवित् प्राणे परिणता ।

( २ )

[२]इत्थं तत्तदनल्पमोहदलनप्राप्तस्वरूपोदयो
योगी नित्यमनात्मभावविरहात् स्वात्मस्थितौ निर्वृतः । ७४५
दृश्यद्रष्टृविवेकविद्भवपदव्यापी विमुक्तामयो
व्युत्थानेऽपि समाधिभाग् भवति सन्मोक्षश्रियः कारणम् ॥

## तन्त्रम्

[३]देयं शान्ताय दान्ताय शिवभक्तिरताय च ।
शिववन्मन्यते यस्तु आचार्यं तत्त्वपारगम् ॥
शिवाद् गुरुतरा भक्तिर्यस्य नित्यं गुणैः(गुरौ) सदा । ७५०
तस्य देयमिदं ज्ञानमन्यथा न कदाचन ॥

## तन्त्रराजः

[४]सृष्टिकाली च संहारे सृष्टौ सा परमेश्वरी ।
स्थितिकाली तथा घोरा ततः संहारकालिका ॥
रक्तकाली चर्वयन्ती रक्तौघमविभेदतः ।
सुकाली यमकाली च मृत्युकाली भयावहा ॥ ७५५
भद्रकाली तथा चान्या परमादित्यकालिका ।
मार्तण्डकाली कालाग्निरुद्रकालमहोल्बणा ॥

---

१. शि० वि०, पृ० १३८; प्र० हृ०, सू० १७

२. स्प० प्र०, पृ० ३०

३. श० र० सं०, पृ० ९३

४. त० आ० वि० ४ । १७३; पृ० १८९

महाकालकुले काली महाभैरवकालिका।
त्रयोदशविधा काली विज्ञेया नामभेदतः॥

## तपस्वी

(१)

[1]पदतरतयादिरूपं ७६०
यद्यत्कलयामि तत्तदधरं ते।
अधरतरापि न कलना
सा काचिद्यत्र न स्थितास्यभितः॥

(२)

[2]सुविषममतादंष्ट्रा-
विदलितजनधैर्यशोणितपिपासुः। ७६५
अहमिति पिशाच एष
त्वत्स्मृतिमात्रेण किङ्करो भवति॥

## तन्त्रसद्भावः

(१)

[3]मन्त्राणां जीवभूता तु या स्मृता शक्तिरव्यया।
तया हीना वरारोहे निष्फलाः शरदभ्रवत्॥

(२)

[4]आमिषं तु यथा खस्थः संपश्यन् शकुनिः प्रिये॥ ७७०
क्षिप्रमाकर्षयेद् यद्वद् वेगेन सहजेन तु।
तद्वदेव हि योगीन्द्रो मनोबिन्दुं विकर्षयेत्॥

---

१. त० आ० वि० ४। १२५; पृ० १३१
२. वि० भै० वि०, श्लो० १०४
३. शि० वि०, पृ० ४८
४. शि० वि०, पृ० ४९

यथा शरो धनुःसंस्थो यत्नेनाताड्य धावति ।
तथा बिन्दुर्वरारोहे उच्चारेणैव धावति ॥

( ३ )

[1]सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये । ७७५
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ॥

( ४ )

[2]न जानन्ति गुरुं देवं शास्त्रोक्तान् समयांस्तथा ।
दम्भकौटिल्यनिरता लौल्यार्थाः क्रिययोज्झिताः ॥
अस्मात्तु कारणाद् देवि मया वीर्यं प्रगोपितम् ।
तेन गुप्तेन ते गुप्ताः शेषा वर्णास्तु केवलाः ॥ ७८०

( ५ )

[3]या सा तु मातृका देवि परतेजःसमन्विता ।
तया व्याप्तमिदं विश्वं सब्रह्मभुवनान्तकम् ॥
तत्रस्थं च यदा देवि व्यापितं च सुरार्चिते ।
अवर्णस्थो यथा वर्णः स्थितः सर्वगतः प्रिये ॥
तथाहं कथयिष्यामि निर्णयार्थं स्फुटं तव । ७८५

( ६ )

[4]या सा शक्तिः परा सूक्ष्मा निराचारेति कीर्तिता ।
हृद्‌बिन्दुं वेष्टयित्वाऽन्तः सुषुप्तभुजगाकृतिः ॥
तत्र सुप्ता महाभागे न किञ्चिन्मन्यते उमे ।
चन्द्राग्निरविनक्षत्रैर्भुवनानि चतुर्दश ॥

१. शि० वि०, पृ० ५१
२. शि० वि०, पृ० ५१
३. शि० वि०, पृ० ५१
४. शि० वि०, पृ० ५२-५४; त० आ० वि० ३ । ६७, पृ० ७७

क्षिप्त्वोदरे तु या देवी विषमूढेव सा गता । ७९०
प्रबुद्धा सा निनादेन परेण ज्ञानरूपिणा ।
मथिता चोदरस्थेन बिन्दुना वरवर्णिनि ॥

तावद्वै भ्रमवेगेन मथनं शक्तिविग्रहे ।
भेदात्तु प्रथमोत्पन्ना बिन्दवस्तेऽतिवर्चसः ॥

उत्थिता तु यदा तेन कला सूक्ष्मा तु कुण्डली । ७९५
चतुष्कलमयो बिन्दुः शक्तेरुदरगः प्रभुः ॥

मध्यमन्थनयोगेन ऋजुत्वं जायते प्रिये ।
ज्येष्ठा शक्तिः स्मृता सा तु बिन्दुद्वयसुमध्यगा ॥

बिन्दुना क्षोभमायाता रेखैवामृतकुण्डली ।
रेखिणी नाम सा ज्ञेया उभौ बिन्दू यदन्तगौ ॥ ८००

त्रिपथा सा समाख्याता रौद्री नाम्ना तु गीयते ।
रोधिनी सा समुद्दिष्टा मोक्षमार्गनिरोधनात् ॥

शशाङ्कशकलाकारा अम्बिका चार्धचन्द्रिका ।
एकैवेत्थं परा शक्तिस्त्रिधा सा तु प्रजायते ॥

आभ्यो युक्तवियुक्ताभ्यः संजातो नववर्गकः । ८०५
नवधा च स्मृता सा तु नववर्गोपलक्षिता ॥

पञ्चमन्त्रगता देवि सद्यआदिरनुक्रमात् ।
तेन पञ्चविधा प्रोक्ता ज्ञातव्या सुरनायिके ॥

स्वरद्वादशगा देवि द्वादशस्था उदाहृता ।
अकारादिक्षकारान्ता स्थिता पञ्चाशता भिदा ॥ ८१०

हृत्स्था एकाणवा प्रोक्ता कण्ठे प्रोक्ता द्वितीयका ।
त्रिराणवा तु ज्ञातव्या जिह्वामूले सदा स्थिता ॥

जिह्वाग्रे वर्णनिष्पत्तिर्भवत्यत्र न संशयः ।
एवं शब्दस्य निष्पत्तिः शब्दव्याप्तं चराचरम् ॥

(७)

[1]बध्वा पद्मासनं योगी नाभावक्षेश्वरं न्यसेत्। ८१५
दण्डाकारं तु तावत्तन्नयेद्यावत् कखत्रयम्॥
निगृह्य तत्र तत्तूर्णं प्रेरयेत् खत्रयेण तु।
एतां बध्वा महायोगी खे गतिं प्रतिपद्यते॥

(८)

[2]........................................पराम्।
गतिमेत्यर्थभावेन कुलमार्गेण नित्यशः॥ ८२०
चरते सर्वजन्तूनां खेचरी नाम सा स्मृता।

(९)

[3]सत्त्वस्थो राजसस्थश्च तमःस्थो गुणवेदकः।
एवं पर्यटते देही स्थानात् स्थानान्तरं व्रजन्॥

(१०)

[4]कलोद्दलितचैतन्यो विद्यादर्शितगोचरः।
रागेण रञ्जितात्मासौ बुध्यादिकरणैर्युतः॥ ८२५
एवं मायात्मको बन्धः प्रोक्तस्तस्यो(स्य) दरात्मकः।
तदाश्रयगुणो धर्मोऽधर्मश्चैव समासतः॥
तत्रासौ संस्थितः पाश्यः पाशितस्तैस्तु तिष्ठति।

---

१. शि० वि०, पृ० ५८
२. शि० वि०, पृ० ५८
३. शि० वि०, पृ० ७४
४. शि० वि०, पृ० ७७

# तिमिरोद्धाटः

( १ )

[1]करन्ध्रचितिमध्यस्था ब्रह्मपाशावलम्बिकाः ।
पीठेश्वर्यो महाघोरा मोहयन्ति मुहुर्मुहुः ॥ ८३०

( २ )

[2]यः प्रियो यः सुहृद् बन्धुर्यो दाता योऽतिवल्लभः ।
तदङ्गभक्षणाद् देवि ह्युत्पतेद् गगनाङ्गना ॥

———

# त्रिकसारः

( १ )

[3]स्वपदा स्वशिरश्छायां यद्वल्लङ्घितुमीहते ।
पादोद्देशे शिरो न स्यात् तथेयं बैन्दवी कला ॥

( २ )

[4]देहोत्थिताभिर्मुद्राभिर्यः सदा मुद्रितो बुधः । ८३५
स तु मुद्राधरः प्रोक्तः शेषा वै अस्थिधारकाः ॥

( ३ )

[5]विदिते तु परे तत्त्वे वर्णातीते ह्यविग्रहे ।
किङ्करत्वं तु गच्छन्ति मन्त्रा मन्त्राधिपैः सह ॥

—:०:—

१. शि० वि०. पृ० १७, १०२
२. शि० वि०, पृ० ६८
३. प्र० हृ०, सू० ४ १
४. शि० वि०, पृ० ११२
५. स्प० प्र०, पृ० ३३

## त्रिकहृदयः

[1]स्वपदा स्वशिरश्छायां यद्वल्लङ्घितुमीहते ।
पादोद्देशे शिरो न स्यात्तथेयं बैन्दवी कला ॥ ८४०

—:०:—

## त्रिविक्रमः

[2]अयमत्र किलाम्नायः सिद्धमुखेनागतं रहस्यं यत् ।
तत् भट्टकल्लटेन्दुर्वसुगुप्तगुरोरवाप्य शिष्याणाम् ॥

—:०:—

## त्रिशिरोमतम्

(१)

[3]उभयोर्भावयोर्ज्ञाने ज्ञात्वा मध्यं समाश्रयेत् ।
युगपच्च द्वयं त्यक्त्वा मध्ये तत्त्वं प्रकाशते ॥
भावे त्यक्ते निरुद्धा चिन्नैव भावान्तरं व्रजेत् । ८४५
तदा तन्मध्यभावेन विकसत्यतिभावना ॥

(२)

[4]अपरः षोडशो यावत्कालः सप्तदशः परः ।
परापरस्तु यः कालः स प्रियेऽष्टादशः प्रभुः ॥
प्राणं एकं त्रिधा कालं कृत्वा चैव त्यजेत् पुनः ।

(३)

[5]पदैकादशिका सा च प्राणे चरति नित्यशः । ८५०
अकारश्च उकारश्च मकारो बिन्दुरेव च ॥

१. शि० वि०, पृ० ९
२. स्प० प्र०, पृ० १
३. त० आ० वि० १ । ८६; पृ० १२७
४. त० आ० वि० १ । ८६; पृ० १२७
५. त० आ० वि० १ । ८६; पृ० १२८

अर्द्धचन्द्रो निरोधी च नादो नादान्त एव च ।
शक्तिश्च व्यापिनी चैव समनैकादशी स्मृता ॥

( ४ )

[1]उन्मना तु ततोऽतीता तदतीतं निरामयम् ॥

( ५ )

[2]भैरवाद्भैरवीं प्राप्तः........................ । ८५५

( ६ )

[3]चतुर्थं संप्रवक्ष्यामि ग्रामधर्मविभेदतः ।

( इत्युपक्रम्य )—

हृदिस्थं सर्वदेहस्थं स्वभावस्थं सुसूक्ष्मकम् ।
सामूह्यं चैव तत्त्वानां ग्रामशब्देन कीर्तितम् ॥
आत्मा वै धर्म इत्युक्तो ग्रामधर्मः प्रकीर्तितः ।
प्रकाशावस्थितं ज्ञानं भावाभावादिमध्यतः ॥ ८६०
स्वस्थाने वर्तनं ज्ञेयं वर्तनं वृत्तिरुच्यते ।
वृत्तिस्तु स्वपदं ज्ञात्वा द्रष्टृत्वं परिपठ्यते ॥
प्रबुद्धं तद्विजानीयाद् बाह्यावरणवर्जितम् ।
परापरविनिर्मुक्तमेकादशपदोज्झितम् ॥
स्वात्मन्यात्मनि यज्ज्ञानं शिवामृतपरिप्लुतम् । ८६५
विविक्तवस्तुकथितशुद्धविज्ञाननिर्मलः ॥
ग्रामधर्मवृत्तिरुक्तस्तन्त्रेऽस्मिन् सर्वथोदितः ।

( ७ )

[4]अथवा शिवमन्विच्छेत् साधकः परतत्त्ववित् ।

---

१. त० आ० वि० १ । ८६; पृ० १२८
२. त० आ० वि० १ । ८६; पृ० १२८
३. त० आ० वि० १ । ८६; पृ० १२९
४. त० आ० वि० १ । ८६; पृ० १२९

( ८ )

[1]स्थितिः कार्या तु तत्त्वस्था मध्यशक्तिप्रभान्विता ।

( ९ )

[2]सेव्यमानमधोर्ध्वं तु प्राणापानोत्थरूढधीः । ८७०
ऊर्ध्वं त्यक्त्वा तु प्रविशेद् रामस्थोऽत्रात एव च ॥

( १० )

[3]रामः किमुच्यते देव योऽत्रस्थः स च कः प्रभो ।
तस्याभ्यासः कथं नाम ब्रूहि सर्वं महेश्वर ॥

( ११ )

[4]रामस्थं परमेशानि योगं यत्कीर्तितं मया ।
कथयामि यथातथ्यमभ्यासस्तस्य योगतः ॥ ८७५

( १२ )

[5]गच्छंस्तिष्ठंस्स्वपन् जाग्रदुन्मिषन् निमिषंस्तथा ।
धावनं प्लवनं चैव आयासः शक्तिवेदनम् ॥
बुद्धिभेदास्तथा भावाः संज्ञाकर्माण्यनेकशः ।
एतच्चतुर्दशविधं रामं तु परिकीर्तितम् ॥
व्यापितं देवदेवेन शिवेन परमात्मना । ८८०
सर्वभावान्तरस्थेन अनेकाकारलक्ष्मणा ॥
कल्मषक्षीणमनसा स्मृतिमात्रनिरोधनात् ।
ध्यायते परमं ध्येयं गमागमपदे स्थितम् ॥

---

१. त० आ० वि० १ । ८६; पृ० १२९

२. त० आ० वि० १ । ८६; पृ० १३१

३. त० आ० वि० १ । ८६; पृ० १३१

४. त० आ० वि० १ । ८६; पृ० १३२

५. त० आ० वि० १ । ९०; पृ० १३६

परं शिवं तु व्रजति भैरवाख्यं जपादपि ।
तत्स्वरूपं जपः प्रोक्तो भावाभावपदच्युतः ॥ ८८५

( १३ )

[1]येन तेन हि रूपेण साधकः संस्मरेत् सदा ।
तस्य तन्मयतां याति चिन्तामणिरिवेश्वरः ॥

( १४ )

[2]शिवव्योमेति या संज्ञा परं ब्रह्मेति यत्पदम् ।

( १५ )

[3]आत्मस्थानं किमाख्यातं.............. ।'

( १६ )

[4]कुण्डल्याख्या तु सा ज्ञेया सर्वाध्वोपरिवर्तिनी । ८९०

( इत्युपक्रम्य )—

प्रमाणोत्थानरहितमुपमाभेदवर्जितम् ।
भूतव्योमपदातीतं चिद्व्योमान्तपदं परम् ॥
भावप्रत्ययसंरम्भमभावं परमा गतिः ।
शिवव्योम तु तज्ज्ञेयं सर्वाधारत्वलक्षणम् ॥
बृहत्त्वं बृंहकत्वं च सूक्ष्मं तच्चान्तवर्ति च । ८९५
परं ब्रह्मेति तत्प्रोक्तं लक्ष्यभूतमलक्ष्यकम् ॥

( तथा )

पूर्वं पदविभागं तु कीर्तितं तदहेयकम् ।
तथापि भूमिकातीतमात्मस्थानं निगद्यते ॥

---

१. त० आ० वि० १ । ११५; पृ० १५७
२. त० आ० वि० ३ १३७; पृ० १४२
३. त० आ० वि ३ । १३७; पृ० १४३
४. त० आ० वि० ३ । १३७-४०; पृ० १४२-१४३

( १७ )

[1]गुरोर्गुरुतरा शक्तिर्गुरुवक्त्रगता भवेत् ।

( १८ )

[2]ततो मूले उत्तरतो नन्दिरुद्रं च जाह्नवीम् । ९००
महाकालं सदंष्ट्रं च यमुनां चैव दक्षिणे ॥

( १९ )

[3]यन्निरावरणं संवित्सतत्त्वं कल्पनार्जितम् ।
तत् परं पुत्रि कथितं सा काष्ठा सा परा गतिः ॥

( २० )

[4]खं हि यद् भैरवं ज्ञेयं सर्वमार्गान्तमन्तगम् ।
विचारयेत्तु यो धीमान् करणव्याप्तिमध्यगः ॥ ९०५
भूमिकास्थो हि चक्रस्थो विन्दते परमार्थतः ।

( २१ )

[5]विमर्शधाम तुर्यं च व्यापकं चोर्ध्वमध्यतः ।
सुशिरं तत्त्वराजानं पराकाशं प्रकीर्तितम् ॥

( २२ )

[6]ऊर्ध्वाधोगमविक्षेपरहितः करणेच्छया ।
रूपं यस्य न हीयेत भावस्थो भावभासकः ॥ ९१०
स्वरूपप्रतिपन्नोऽसावन्तःकरणवर्जितः ।
भावस्थं तं विजानीयाद् ग्राह्यग्राहकविप्लवे ॥

---

१. शि० वि०, पृ० ६०

२. त० आ० वि० ४ । २५१; पृ० २८०

३. त० आ० वि० ५ । ८७; पृ० ३९६

४. त० आ० वि० ५ । ९१; पृ० ४००

५. त० आ० वि० ५ । ९१; पृ० ४०१

६. त० आ० वि० ५ । ९२; पृ० ४०३

( २३ )

[1]प्राणापानौ समौ यस्य साम्यावस्थानमागतौ ।
निस्तरङ्गप्रकारेण भावाभावावरोधदृक् ॥

( २४ )

[2]स्वरूपस्थितिसंयोगलक्षवृत्तिरतस्य च ।  ९१५
भावनिःस्पृहमेतद्धि तत्पदत्यागवर्तिनः ॥

( २५ )

[3]खमात्मा केवलं विद्यात् खमणुः सर्वदिक्कृतः ।
कुलमूलं तु खं ज्ञेयं खं शक्तिः परिपठ्यते ॥
एकं तु खमिहोद्भाव्यं खद्वयं भूतिचिद्रतिः ।
द्रष्टृदृश्योपरक्तं च शक्तित्रितयं खं विदुः ॥  ९२०
निष्पन्नपरिणामेन खमभूतत्वलक्षणम् ।

( २६ )

[4]ग्राह्यं च ग्राहकं चैव संवित्तिं च तृतीयिकाम् ।
संनिवेशं तथा व्याप्तिमाक्षेपं त्यागमेव च ॥
करणं सप्तधा ख्यातमभ्यासं बोधपूर्वकम् ।
तद्व्याप्तिपूर्वमाक्षेपकरणं स्वप्रतिष्ठता ॥  ९२५

( २७ )

[5]ग्राह्यस्वरूपविज्ञानं द्रव्यत्वे यद्व्यवस्थितम् ।
व्यक्तिनिष्ठं तु मन्तव्यं ग्राहकं तु स्फुटार्थकम् ॥
ग्राहयेच्चित्स्वरूपं तु व्यक्ताव्यक्तविचारकम् ।
प्रत्यक्षादिप्रमाणैश्च ग्रहीता गोलकस्थितिः ॥

---

१. त० आ० वि० ५ । ९२; पृ० ४०३
२. त० आ० वि० ५ । ९२; पृ० ४०४
३. त० आ० वि० ५ । ३५; पृ० ४०५
४. त० आ० वि० ५ । १२०; पृ० ४४०
५. त० आ० वि० ५ । १२९; पृ० ४४०–४४१

गोलकं द्वारमित्युक्तं मनसा बाह्यतां ततः । ९३०
न जहाति न गृह्णाति ग्रहीता ग्राहकः स्मृतः ॥
लक्ष्यलक्षसमायोगात् प्रतिज्ञावस्तुयोगतः ।
उभयोर्नान्यविश्लेषं यथैवानुभवं स्मृतम् ॥
विचार्यमाणं यत्किञ्चित्स्वरूपविभवात्मकम् ।
संनिवेशं तु तज्ज्ञेयं तद्व्याप्तिरभिधीयते ॥ ९३५
स्वरूपस्थितिभावस्य एकदेशगतस्य च ।
घोणार्चिःप्रविकासं तु स्थानात् स्थानपदक्रमात् ॥
ज्ञायते वस्तुबोधज्ञस्त्रिप्रकारेण वस्तुनि ।
व्याप्तिस्तु कथिता सा तु सर्वज्ञा सर्वगाऽपरा ॥
अनुभूय स्वरूपं तु निवृत्तिं नैव गच्छति । ९४०
ज्ञानभेदपदप्राप्त्या अत्याक्षेपगमात्मनः ॥
स्वरूपं चिन्त्यमानोऽपि ग्राह्यप्राकारधर्मधीः ।
त्यजेत् पूर्वपदाद् भेदात् त्यागं तु परिकीर्तितम् ॥
पदस्थस्त्यागभागी च संवृतात्मपरस्य च ।
आक्षेपं तं विजानीयात् सर्वत्रावस्थितं प्रिये ॥ ९४५

( २८ )

[1]अदृष्टमण्डलोऽप्येवं यः कश्चिद्वेत्ति तत्त्वतः ।
स सिद्धिभाग्भवेन्नित्यं स योगी स च दीक्षितः ॥
अविधिज्ञो विधानज्ञो जायते यजनं प्रति ।

( २९ )

[2]सर्वदेवमयः कायस्तं चेदानीं शृणु प्रिये ।
पृथिवी कठित्वेन द्रवत्वेऽम्भः प्रकीर्तितम् ॥ ९५०
त्रिशिरोभैरवः साक्षाद् व्याप्य विश्वं प्रतिष्ठितः ।

---

१. त० आ० १३ । १५२-५३; पृ० ९८
२. प्र० हृ०, सू० ४

## देविकाक्रमः

[1]तत्तद्रूपतया ज्ञानं बहिरन्तः प्रकाशते ।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥
नहि ज्ञानादृते भावाः केनचिद् विषयीकृताः ।
ज्ञानं तदात्मतां यातमेतस्मादवसीयते ॥ ९५५

## देवीकालोत्तरम्

( १ )

[2]ज्ञानोत्पत्तिनिमित्तं तु क्रियाचर्याः प्रकीर्तिताः ।

( २ )

[3]निद्राया बोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः ।
पक्षद्वयपरित्यागे संप्राप्ते नैव चालयेत् ॥
निराश्रयं सदा चित्तं सर्वालम्बनवर्जितम् ।
मनोऽवस्थाविनिर्मुक्तं विज्ञानं मुक्तिलक्षणम् ॥ ९६०

( ३ )

[4]नात्र पूजा नमस्कारो न जपो ध्यानमेव च ।
केवलं ज्ञेयमित्युक्तं वेदितव्यं न किञ्चन ॥

---

१. म० म० प०, पृ० १०
२. श० र० सं०, पृ० ६
३. श० र० सं०, पृ० ८५
४. श० र० सं०, पृ० ८६

## देव्यामतसूत्रम्

[1]भग्ने घटे यथा दीपः सर्वतः संप्रकाशते ।
देहपाते तथा चात्मा भाति सर्वत्र सर्वदा ॥

## द्वयसंपत्तिः

[2]अहङ्कारमयी भूमिर्बुद्धिभूमेः परा हि सा । ९६५
तया व्याप्तमिदं विश्वं ज्ञाता सैव विमुक्तिदा ॥
संविद्रूपा पराशक्तिरभिन्ना परमेश्वरात् ।
ज्ञानशक्तिः पुनः सैव मन्त्ररूपा प्रदश्यते ॥
अहङ्कारः स्मृतो मन्त्रः शिवशक्त्यात्मरूपकः ।
..............................

यदत्राद्यमवर्णाख्यं स शिवः परमेश्वरः ॥ ९७०
नादबिन्द्वात्मकं यच्च सा शक्तिरैश्वरी स्मृता ।
द्वयमेतत् समाख्यातं बीजभूतं चराचरे ॥
अज्झलाद्याश्च ये वर्णास्तेऽनेनैव हि मुद्रिताः ।
शब्दब्रह्मेति तत्प्राहुर्योगिनस्तत्त्वचिन्तकाः ॥
अप्राणमस्वरं ध्यात्वा पश्यन्त्यां निर्विभागया । ९७५
चिन्मात्रामर्शयोगेन निलीनः स्यात् परे पदे ॥
तथाहि सिद्धैरादिष्टं क्वचित् सिद्धान्तसंग्रहे ।
नाभेरूर्ध्वं वितस्तिस्तु कण्ठाधस्तात् षडङ्गुलम् ॥
हृदयं मध्यदेशे तु हृन्मध्ये कमलं स्मृतम् ।
पद्ममध्ये स्थिता सूक्ष्मा कर्णिका त्रिपथोपगा ॥ ९८०
तन्मध्ये संस्थितो ह्यात्मा ह्यकारादिस्वरूपधृत् ।
अकारान्तः परं सूक्ष्मं चिन्मात्रस्पन्दलक्षणम् ॥

---

१. श० र० सं०, पृ० ९२
२. वि० भै० वि०, श्लो० ९०

तस्याप्युपासा विज्ञानभैरवे कथिता यथा ।
अबिन्दुमविसर्गं च ........................ ॥
आत्मस्थाने निराधारा द्वितीया शक्तिरैश्वरी । ९८५
बीजभूता कुण्डलिनी सार्धत्रिवलयात्मिका ॥
प्राणशक्तिरियं देहे हकाराख्या नदत्यलम् ।
कर्णान्तर्विवरे योगी स्थगित्वा लक्षयेत् स्फुटम् ॥
बिन्दुरूपा भ्रुवोर्मध्ये संसारजननी शिवा ।
लक्ष्यते योगिभिर्नित्यं भ्राजमाना स्वतेजसा ॥ ९९०
तस्य बिन्दोस्तु चन्द्रार्कौ वामदक्षिणनेत्रयोः ।
निराश्रयौ तु तौ कृत्वा विशेद् ब्रह्म सनातनम् ॥

## धातुसमीक्षा

[1]अविद्याशबलस्यास्य स्थितं मेयत्वमात्मनः ।
गृहीतं न निजं रूपं शबलेन तदात्मना ॥
सा चाऽनृतात्मिकाऽविद्या नानृतस्य हि वस्तुता । ९९५
नाऽवस्तु वस्तुनो नाशं विकारं वा करोत्यतः ॥
नाच्छादितस्य तमसा रज्जुखण्डस्य विक्रिया ।
नाशो वा क्रियते यद्वत् तद्वन्नाविद्ययाऽऽत्मनः ॥
नाऽतः स्वतो न परतो बन्धोऽस्य परमात्मनः ।
बद्धोऽथवाऽविद्यया जीवो मुक्तिस्तस्य हि तत्क्षये ॥ १०००

## नन्दिशिखा

[2]अनिर्देश्यः शिवो ह्येवं कथितः परमेश्वरः ।
उपायः कथ्यतां देव भक्तानुग्रहकाम्यया ॥

१. स्प० प्र०, पृ० ४-५ २. त० आ० वि० १३ । १६४; पृ० १०५

## नवरत्नमालिका

[1]ओङ्कारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम् ।
आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम् ॥

## नवशतीशास्त्रम्

[2]अनन्तं परमं ज्योतिः सर्वप्राणिहृदि स्थितम् । १००५

## नागार्जुनः

[3]सर्वालम्बनधर्मैश्च सर्वतत्त्वैरशेषतः ।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः ॥

## श्रीनाथपादाः

[4]श्रयेत् स्वातन्त्र्यशक्तिं स्वां सा श्रीकाली परा कला ।

## नारदसंग्रहः

(१)

[5]सर्वो विकल्पः संसारो नान्यो बन्धो विकल्पतः ।

१. सौ० ल० अरु०, पृ० ४०
२. यो० दी०, पृ० ६३
३. स्प० प्र०, पृ० १८
४. शि० वि०, पृ० ९२
५. स्प० प्र०, पृ० ७

( २ )

[1]यथा सुभर्जितं बीजं नेह भूयः प्ररोहति । १०१०
विकल्पक्षीणचित्तस्य तथा भूयो न संसृतिः ॥

( ३ )

[2]गुरवे दक्षिणां दद्यात् सर्वस्वं सार्थमेव वा ।
सर्वस्वमथवाऽप्यल्पं संसारोच्छेदहेतवे ॥

## निशाकुलम्

( १ )

[3]स्फटिकोपलगो रेणुः किं तस्य कुरुतां प्रिये ।
व्योम्नीव नीलं हि मलं मलशङ्कां ततस्त्यजेत् ॥ १०१५

( २ )

[4]न मलो मलिनः कश्चिद्विद्यते वस्तुतः प्रिये ।
स्वमनोमलिनत्वेन मलमात्मनि कथ्यते ॥
मलमायाविचारेण क्लिश्यन्ते स्वल्पबुद्धयः ।
स्फटिकोपलगो रेणुः किं तस्य कुरुतां प्रिये ॥
अज्ञानमात्रं तु मलं ज्ञानं शुद्धं स्वभावतः । १०२०
शुद्धस्वभावबोधस्य न बन्धः स्यात् कदाचन ॥
आकाशे नीलिमा यद्वन्मलमेवं चिदात्मनः ।

---

१. स्प० प्र०, पृ० २१
२. स्प० प्र०, पृ० ५४
३. म० म० प०, पृ० ३३
४. त० आ० वि० १३ । १२७; पृ० ८४-८५

## निशाचारः

(१)

[1]संज्ञा हि त्रिविधा ज्ञेया शिवशास्त्रेषु सर्वदा ।
पारिभाषिकनैमित्ती सिद्धा चासौ प्रसिद्धिभाक् ॥
इह नैमित्तिकी संज्ञा निमित्तात्तु समागता । १०२५

## निशाटनम्

(१)

[2]त्रिप्रत्ययमिदं ज्ञानमात्मा शास्त्रं गुरोर्मुखम् ।

(२)

[3]एषा तु कौलिकी विद्या सर्वसिद्धिप्रदायिका ।
सकाशाद् देवदेवस्य निर्याता शक्तिवर्त्मनि ॥
वामेश्वर्यवतारे तु प्रकाशत्वमुपागता ।

(३)

[4]त्रिप्रत्ययमिदं ज्ञानमात्मा शास्त्रं गुरोर्मुखम् । १०३०
प्राधान्यात् स्वोपलब्धिः स्याद्विकल्पार्णवतारिणी ॥
विकल्पाज्जायते शङ्का सा शङ्का बन्धरूपिणी ।
बन्धोऽन्यो नहि विद्येत ऋते शङ्कां विकल्पजाम् ॥
विकल्पायासयुक्तस्य नहि स्याच्छ्रेयसी गतिः ।
मन्त्रशङ्कात्मशङ्का च द्रव्यशङ्का तथा पुनः ॥ १०३५
भूतशङ्का तथा दिव्यकर्मशङ्का परा मता ।
पञ्चधा तु स्मृता शङ्का तत्त्वशङ्का परा स्मृता ॥
षड्विधां कथयिष्यामि यथा मोक्षमवाप्स्यसि ।

---

१. त० आ० वि० ६ । ३३; पृ० ३३
२. त० आ० वि० ४ । ७९; पृ० ८४
३. त० आ० वि० ४ । १७७; पृ० २०७
४. त० आ० वि० १३ । १९८; पृ० १२६–१२७

( इत्याद्युपक्रम्य )—

तस्मात् सर्वप्रयत्नेन स्वात्मप्रत्ययकारणम् ।
स्वसंवित्तिकरं नृणां नरशक्तिशिवात्मकम् ॥ १०४०
बोद्धव्यं लयभेदेन यथा प्रत्ययमात्मनि ।
विकल्पक्षीणचित्तस्तु परमाद्वैतभावितः ॥
मुच्यते नात्र सन्देह इति सत्यं ब्रवीमि ते ।

## निःश्वासागमः

( १ )

[1]स्नानेन निर्मलो मन्त्रजपात् सिद्धिर्न संशयः ।
पूजायां सन्निधानं न होमो नैव फलप्रदः ॥ १०४५
ध्यानेन सर्वगं देवं योगैर्योगित्वमाप्नुयात् ।
व्रतेन कायशुद्धिः स्याद् दीक्षया मुक्तिरिष्यते ॥

( २ )

[2]स चेतनः स्मृतो जीवो यदा शक्त्या तु युज्यते ।
अन्यथा निष्कलो ह्यात्मा विषसुप्तेव लक्ष्यते ॥

( ३ )

[3]एकैव वस्तुतः शैवी या शक्तिर्निर्मला परा । १०५०
अविनाभाविनी शम्भोः शुचेरुष्णमिव प्रभोः ॥
तयात्मशिवयोः सन्धिः शिवबोधपरापरा ।

---

१. श० र० सं०, पृ० ६९

२. श० र० सं०, पृ० ७२

३. श० र० सं०, पृ० ७४

( ४ )

[1]यस्य जाग्रे प्रलीयन्ते सर्वे भावाः सुषुप्तवत् ।
पर्याप्तं तस्य विज्ञानं त्रिपदं तेन लङ्घितम् ॥

( ५ )

[2]यदा मनः परे तत्त्वे लब्धलक्ष्यं निलीयते । १०५५
तदा ह्यशेषविज्ञानं विनाशमुपगच्छति ॥

( ६ )

[3]लयातीतः परो देवो निरुपाख्यो निरामयः ।
ज्ञात्वैवमुच्यते ज्ञानी भुञ्जानो विषयानपि ॥

( ७ )

[4]संसृष्टश्च स्वलीनश्च विक्षिप्तो गतिरागतिः ।
मनश्चतुर्विधं प्रोक्तं तस्य भेदमिमं शृणु ॥ १०६०
न मनो नापि मन्तव्यो न मन्ता च विभाव्यते ।
स्वलीनो विषयैर्मुक्त एकीभूतः सुषुप्तिवत् ॥
विषयान् गृह्यमाणोऽपि ज्ञेयत्वमधिगच्छति ।
न च तैर्युज्यते ज्ञानैः संश्लिष्टः स तु उच्यते ॥
अज्ञानाद् गच्छति ज्ञानं ज्ञानादज्ञानमेव च । १०६५
चलते यस्य दौर्बल्यात् तस्याऽसौ गतिरागतिः ॥
ज्ञानेन श्लिष्यते यस्मादिन्द्रियार्थपरायणः ।
त्रिकालमाकुलो नित्यं स तु विक्षिप्त उच्यते ॥
स्वलीनश्चोत्तमस्तत्र गुणातीतो निरामयः ।
मध्यमः स तु विज्ञेयः संश्लिष्टः सात्त्विकः स्मृतः ॥ १०७०

---

१. श० र० सं०, पृ० ८२
२. श० र० सं०, पृ० ८३
३. श० र० सं०, पृ० ८४
४. श० र० सं०, पृ० ८४

अधमश्चपलः क्षुद्रो राजसो गतिरागतिः ।
तामसः स तु विक्षिप्तश्चतुर्थो ह्यधमाधमः ॥
गुणात्मकः समुद्दिष्टो मलप्रायश्च देहिनाम् ।
निर्गुणं त्वधिकत्वेन यत्र लीनो भविष्यति ॥
मनसश्च स्वलीनस्य यत् सुखं ह्यात्मसाक्षिकम् । १०७५
योगावस्था परा ह्येषा प्राहुर्योगविदो जनाः ॥

( ८ )

[1]यथा वायुः सुशीघ्रोऽपि मुक्त्वाऽऽकाशं न गच्छति ।
ज्ञेये निक्षिप्तचित्तस्तु विषयस्थो न मुञ्चति ॥

( ९ )

[2]भुङ्क्ते तु विषयान् सर्वानसौ लेप्यस्यालेपकः ।
यस्य सर्वगतो भावो शंभावस्थो निरन्तरः ॥ १०८०

( १० )

[3]प्रकटयस्वेदं ज्ञानं मद्भक्तानां वरानने ।
रक्षणीयं प्रयत्नेन तस्करेभ्यो धनं यथा ॥

## निःश्वासोत्तरम्

[4]एक एव शिवः शक्तिस्तथा कार्याणि भेदतः ।
तस्माच्छिवात्मिका शक्तिर्भोगमोक्षौ शिवेच्छया ॥

---

१. श० र० सं०, पृ० ८६
२. श० र० सं०, पृ० ८७
३. श० र० सं०, पृ० ९३
४. श० र० सं०, पृ० ७४

## नैःश्वासतन्त्रम्

[1]त्वमेकांशेनान्तरात्मा नर्तकः कोशरक्षिता । १०८५

## पञ्चरात्रोपनिषत्

[2]ज्ञाता च ज्ञेयं च वक्ता च वाच्यं च भोक्ता च भोग्यं च ।

## पञ्चरात्रश्रुतिः

[3]यद्वत् सोपानेन प्रासादमारुहेत् प्लवेन वा नदीं तरेत् तद्वच्छास्त्रेणैव हि भगवान् शास्ताऽवगन्तव्यः ।

## पञ्चशतिकम्

( १ )

[4]मन्त्रोदया व्योमरूपा व्योमस्था व्योमवर्जिता ।
सर्वा सर्वविनिर्मुक्ता विश्वस्मिन् सृष्टिनाशिनी ॥ १०९०
या कला विश्वविभवा सृष्ट्यर्थकरणक्षमा ।
यदन्तः शान्तिमायाति सृष्टिकालीति सा स्मृता ॥

१. शि० वि०, पृ० ८९
२. स्प० प्र०, पृ० ४०
३. स्प० प्र० पृ० २
४. त० आ० वि० ४ । १४८; पृ० १५८

( २ )

[1]न चैषा चक्षुषा ग्राह्या न च सर्वेन्द्रियस्थिता ।
निर्गुणा निरहङ्कारा रञ्जयेद्विश्वमण्डलम् ॥
सा कला तु यदुत्पन्ना सा ज्ञेया रक्तकालिका । १०९५

( ३ )

[2]हासिनी पौद्गली येयं बालाग्रशतकल्पना ।
कल्पते सर्वदेहस्था स्थितिः सर्गस्य कारिणी ॥
यदुत्पन्ना तु सा देवी पुनस्तत्रैव लीयते ।
तां विद्धि देवदेवेश स्थितिकालीं महेश्वर ॥

( ४ )

[3]यमरूपस्वरूपस्था रूपातीतस्वरूपगा । ११००
सा कला लीयते यस्यां यमकाली तु सा स्मृता ॥

( ५ )

[4]चण्डकाली शुद्धवर्णा याऽमृतग्रसनोद्यता ।
भावाभावविनिर्मुक्ता विश्वसंहाररूपिणी ॥
यत्र सा याति विलयं सा च संहारकालिका ।

( ६ )

[5]ओमित्येषा कुलेशानी मृत्युकालान्तपातिनी । ११०५
मृत्युकालकला यस्याः प्रविशेद्विग्रहं शिव ॥
तदा सा मृत्युकालीति ज्ञेया गिरिसुताधव ।

---

१. त० आ० वि० ४ । १४९; पृ० १६०
२. त० आ० वि० ४ । १५०; पृ० १६३
३. त० आ० वि० ४ । १५१; पृ० १६५
४. त० आ० वि० ४ । १५२; पृ० १६६
५. त० आ० वि० ४ । १५४; पृ० १६९

( ७ )

[1]गमाममसुगम्यस्था महाबोधावलोकिनी ।
मायामलविनिर्मुक्ता विज्ञानामृतनन्दिनी ॥
सर्वलोकस्य कल्याणी रुद्रा रुद्रसुखप्रदा । १११०
यत्रैव शाम्यति कला रुद्रकालीति सा स्मृता ॥
भेदस्य द्रावणाद् भद्रा भद्रसिद्धिकरीति या ।

( ८ )

[2]शब्दब्रह्मपदादीता षट्त्रिंशान्तनवान्तगा ।
ब्रह्माण्डखण्डादुत्तीर्णा मार्तण्डी मूर्तिरव्यया ॥
सा कला लीयते यस्यां मार्तण्डी कालिकोच्यते । १११५

( ९ )

[3]एकाकिनी चैकवीरा सुसूक्ष्मा सूक्ष्मवर्जिता ।
परमात्मपदावस्था परापरस्वरूपिणी ॥
सा कला पररूपेण यत्र संलीयते शिवः ।
सा कला परमार्केति ज्ञेया भस्माङ्गभूषण ॥

( १० )

[4]वरदा विश्वरूपा च गुणातीता परा कला । ११२०
अघोषा सास्वरारावा कालाग्निग्रसनोद्यता ॥
निरामया निराकारा यस्यां सा शाम्यति स्फुटम् ।
कालाग्निरुद्रकालीति सा ज्ञेयामरवन्दित ॥

---

१. त० आ० वि० ४ । १५८; पृ० १७२
२. त० आ० वि० ४ । १६३; पृ० १७८
३. त० आ० वि० ४ । १६५; पृ० १८१
४. त० आ० वि० ४ । १६८; पृ० १८३

( ११ )

[1]ऋतोज्ज्वला महादीप्ता सूर्यकोटिसमप्रभा ।
कलाकलङ्करहिता कालस्य कलनोद्यता ॥ ११२५
यत्र सा लयमाप्नोति कालकालीति सा स्मृता ।

( १२ )

[2]दशसप्तविसर्गस्था महाभैरवभीषणा ।
संहरेद् भैरवान् सर्वान् विश्वं च सुरपूजित ॥
सान्तः शाम्यति यस्यां च सा स्याद् भरितभैरवी ।
महाभैरवचण्डोग्रघोरकाली परा च सा ॥ ११३०

( १३ )

[3]डकला भीषणा रौद्रा कुलकालिनिराकुला ।
अलक्ष्या लक्ष्यनिर्लक्ष्या सुकाली नाम सिद्धिदा ॥



## पद्मवाहिनी

( १ )

[4]षट्कोणं शिरसि ध्यात्वा पश्चिमादिष्वनुक्रमात् ।
कोणेषु पूजयेदष्टाविंशकं च यथाक्रमात् ॥
चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनः । ११३५
चतुष्कमिति संभिन्नाः क्रमात् पार्थिवरश्मयः ॥

---

१. त० आ० वि० ४ । १७०; पृ० १८६
२. त० आ० वि० ४ । १७२; पृ० १८७
३. त० आ० वि० ४ । १७३; पृ० १८९
४. सौ० ल० सौभा०, श्लो० १४

( २ )

[1]चतुष्कं च चतुष्कं च षट्कं भूयश्चतुष्ककम् ।
पञ्चकं त्रिकमित्येव भिन्ना जलमरीचयः ॥

( ३ )

[2]पञ्चकं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनः ।
षट्कमित्थं क्रमाद्भिन्नास्तैजसक्रमरश्मयः ॥ ११४०

( ४ )

[3]चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं त्रिकम् ।
इति क्रमेण भिन्नाः स्युर्वायवीया मरीचयः ॥

( ५ )

[4]षट्कं षट्कं पुनः षट्कं षट्कं षट्कं पुनश्च तत् ।
इति क्रमात् समुद्दिष्टा नाभसा दिव्यरश्मयः ॥
साधकेन समभ्यर्च्यो मध्ये देवो यथाविधि । ११४५

( ६ )

[5]चतुष्कं पञ्चकं चैव चतुष्कं सप्तकं पुनः ।
चतुष्कमष्टकं चेति क्रमान्मानसरश्मयः ॥
मूलाधारादिचक्रेषु पूजयेद्वा प्रकारतः ।

---

१. सौ० ल० सौभा०, श्लो० १४
२. सौ० ल० सौभा०, श्लो० १४
३. सौ० ल० सौभा०, श्लो० १४
४. सौ० ल० सौभा०, श्लो० १४
५. सौ० ल० सौभा०, श्लो० १४

## परमार्थसंग्रहः

( १ )

[1]परमं यत् स्वातन्त्र्यं दुर्घटसम्पादनं महेशस्य ।
देवी मायाशक्तिः स्वात्मावरणं शिवस्यैतत् ॥ ११५०

## पराख्यसंहिता

( १ )

[2]सन्निधानेन यस्याऽस्मिन् सर्वकार्यस्य सम्भवः ।
अक्षहीनेऽपि सामर्थ्यं दृष्टं तत्कर्षणात्मनि ॥
सामर्थ्यं तद्वदीशस्य सर्वकृत्ये निसर्गजम् ।

( २ )

[3]चिद्रूपमात्मनो रूपं दृक्क्रियागुणलक्षितम् ।
ज्ञानरूपस्थितस्यापि स्वरूपं दृक्क्रियात्मकम् ॥ ११५५
कर्तृशक्तिरणोर्नित्या विम्वी चेश्वरशक्तिवत् ।
तमश्छन्नतयाऽर्थेषु नाभाति निरनुग्रहा ॥

( ३ )

[4]दृक्क्रियात्मकमैश्वर्यं यस्य तद् दातृपूर्वकम् ।
ईश्वरः सोऽत्र मन्तव्यः शक्तिद्वययुतः प्रभुः ॥

( ४ )

[5]निमित्तमीश्वराख्यं तद् यद् दृष्टं सहकारणम् । ११६०
उपादानं च यत् सूक्ष्मं सर्वकार्येषु संहितम् ॥

---

१. म० प०, पृ० ४६
२. श० र० सं०, पृ० ८
३. श० र० सं०, पृ० १६
४. श० र० सं०, पृ० १६
५. श० र० सं०, पृ० २४

( ५ )

[1]मूर्ताः सावयवा येऽर्था नानारूपपरिच्छदाः ।
स्थूलावयवशिष्टत्वाद् बुद्धिमद्धेतुपूर्वकाः ॥
अतोऽस्ति बुद्धिमान् कश्चिदीश्वरः समवस्थितः ।

( ६ )

[2]देहान्योऽनश्वरो व्यापी विभिन्नः समलोऽजडः । ११६५
स्वकर्मफलभुक् कर्ता किञ्चिज्ज्ञः सेश्वरः पशुः ॥

( ७ )

[3]विभुः सन् ज्ञानरूपोऽपि प्रदेशे वेत्ति येन तत् ।
किञ्चिज्ज्ञस्तेन स प्रोक्तो व्यवधानादिदर्शनात् ॥

( ८ )

[4]शिवत्वाद् युज्यते मोक्षे पशुत्वाद् युज्यते तनौ ।
भोगेष्वपि च सामर्थ्यात् कर्मणो मुनिसत्तम ॥ ११७०

( ९ )

[5]ज्ञानादीनामुपायानां दीक्षा कारणमिष्यते ।
चतुर्णामङ्गता प्रोक्ता तत्स्वरूपविभागतः ॥

---

१. श० र० सं०, पृ० २५-२६
२. श० र० सं०, पृ० ३२
३. श० र० सं०, पृ० ७१
४. श० र० सं०, पृ० ७३
५. श० र० सं०, पृ० ७७

# परापञ्चाशिका

( १ )

[1]अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ।
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥

( २ )

[2]सिसृक्षोः प्रथमः स्पन्दः शिवतत्त्वं प्रभोः स्मृतम् ॥ ११७५

( ३ )

[3]अनुत्तरेच्छा उन्मेष आनन्देशनमूनता ।
क्रियेच्छाज्ञानशक्तीनां सत्ता चोच्छूनता च षट् ॥

( ४ )

[4]इच्छेषणान्तरारूढाः स्फुटास्फुटजगन्मयाः ।
चत्वारः परतो वर्णाः षण्ढात्मानः प्रचोदिताः ॥

( ५ )

[5]सर्वसंविन्नदीभेदाभिन्नविश्रान्तिभूमये । ११८०
नमः प्रमातृवपुषे शिवचैतन्यसिन्धवे ॥

( ६ )

[6]स्वांशरूपेषु भानेषु मायासत्त्वविभेदधीः ।
विद्याशक्तिविशुद्धिश्च सिद्धिं प्राकाम्यसंज्ञिताम् ॥
एताः सर्वोपचारेण पूजयेद्देवताः क्रमात् ।

---

१. यो० दी० पृ० ७६, ८७; सौ० ल० सौभा०, श्लो० ३३
२. यो० दी०, पृ० २८२
३. यो० दी०, पृ० २८९
४. यो० दी०, पृ० २८९
५. यो० दी०, पृ० २९३
६, यो० दी०, पृ० २९९

( ७ )

[1]द्विधेयं मातृका देवी बीजयोन्यात्मना स्थिता । ११८५

# परास्तोत्रम्

( १ )

[2]एके भूजलखानिलानलकलारब्धां बहिः प्रक्रिया-
मुत्तीर्णांत्विषमन्तरेव कतिचित् चित्काकणीमूचिरे ।
अन्ये केचन यामलामृतसरित्संभेदसंभोगिनो
मातस्त्वामपृथक्प्ररोहमुभयोरौचित्यमाचक्षते ॥

( २ )

[3]आनन्दोदयलक्ष्मणोरकलुषैरुत्पक्ष्मणोरूष्मलै- ११९०
रक्ष्णोरुन्मिषितैः प्रताप्य पृथिवीमन्तःस्थलैकस्पृशः ।
पूर्णाहम्प्रथनोत्सवाय सुधियो यामूर्ध्वमध्यासते
सा काचित् त्वमचिन्त्यसिद्धिरचला मुद्रा महत्युच्यसे ॥

( ३ )

[4]दातॄणां करपल्लवेषु करिणां गण्डेषु पृथ्वीरुहां
पुष्पेषु स्तनमण्डलेषु सुदृशामंसेषु भूमीभुजाम् । ११९५
कण्ठाग्रेषु च गायतां कवयतां जिह्वासु चेतस्विनां
सङ्कल्पेषु च कल्पयन्ति कतिचिद् धन्यास्तवैवोद्यमम् ॥

---

१. यो० दी०, पृ० १३२, ३०२
२. म० म० प०, पृ० ७८
३. म० म० प०, पृ० ९४
४. म० म० प०, पृ० १०७

( ४ )

[1]मातुर्गर्भसमुद्गकादवतरन्नुर्वीमिमामर्भक-
स्तत्पूर्वं स्तनचूचुकप्रणयिना मुग्धेन वक्त्रेण ते ।
आचष्टे तदनश्वरं पदमहंकुर्वन् परे किं पुनः १२००
क्रीडाकञ्चुलिका कलेवरमयी कुत्रापि न त्यज्यते ॥

( ५ )

[2]पृथ्वी पूर्वमितो वनं तरुरतस्तत्रापि शाखा ततः
पत्रं तत्र च पुष्पमत्र च फलं माधुर्यमस्मादिति ।
एकस्मादपि तारतम्यपदवीमुत्कर्षणीं पश्यतो
विश्वस्मादपि कापि सिध्यति परे त्वामेव तां ब्रूमहे ॥ १२०५

## पर्यन्तपञ्चाशिका

( १ )

[3]स हि भैरवसिद्धान्तपूर्वपक्षोऽपि यन्मयः ।

( २ )

[4]शुद्धिर्बहिष्कृतार्थानां स्वाहन्तायां निमज्जनम् ।

( ३ )

[5]अनन्तैतावदाकारस्वीकारेऽप्येकलक्षणाम् ।
तां स्वसंविदमाविश्य विकल्पान्न विकल्पयेत् ॥

---

१. म० म० प०, पृ० १४०
२. म० म० प०, पृ० १४८
३. म० म० प०, पृ० १२
४. म० म० प०, पृ० ४५
५. म० म० प०, पृ० ४९

( ४ )

[1]चित्स्वाभाव्यादसौ देवः स्वात्मना विमृशन् प्रभुः । १२१०
अनाश्रितादिभूम्यन्ता भूमिकाः प्रतिपद्यते ॥

( ५ )

[2]तत्र वाचकवाच्यात्मस्पन्दयोरेकशः प्रभोः ।
स्थूलसूक्ष्मपराभासक्रमयोः षड्विधाऽध्वता ॥

## पादुकोदयः

( १ )

[3]अतो विश्वात्मको नाथः .................. ।

( इत्यारभ्य )—

लोकायतानां देहात्मा शून्यात्मा शून्यवादिनाम् । १२१५
क्षणात्मा क्षणनिष्ठानां भिन्नात्मा भेददर्शिनाम् ॥
मीमांसिनामपूर्वात्मा ब्रह्मात्मा ब्रह्मवादिनाम् ।
अद्वैतिनामभेदात्मा बहुना वा किमुच्यते ॥
आक्रीडनं च बालानां स एव परमो गुरुः ।
स एव च महार्थात्मा माहार्थिकमनीषिणाम् ॥ १२१२

( २ )

[4]विमर्शो बिन्दुनादौ च स्फोटः शब्दश्च वाक् क्रमः ।

---

१. म० म० प०, पृ० ७०
२. म० म० प०, पृ० ७२
३. म० म० प०, पृ० ११–१२
४. म० म० प०, पृ० ५०

( ३ )

[1]तत्र यत् पूज्यमस्माकं शक्तीनां मण्डलं महत् ।
स्वस्वभावात्मके शम्भौ तत् कृत्स्नं पर्यवस्यति ॥
सोऽपि देवे गुरौ स्वात्मन्यैकात्म्यमुपगच्छति ।
स च स्वभावादेकः सन्ननेक इव भासते ॥ १२२५
आरभ्य मङ्गलादीप्तिशिवानन्दादिकं क्रमम् ।
अम्बानाथपदाध्यासात् पारम्पर्येण पूज्यते ॥
शक्तिः शिवो देवपाणिर्दक्षिणामूर्तिरित्यपि ।
अन्यथा वा समाख्यातो लोके सोऽयमलौकिकः ॥
तत्तत्कालानुगुण्येन देवैस्तैस्तैर्बुभुत्सुभिः । १२३०
तत्तत्पृथक्त्वमायाति कल्लोलैरिव भानुमान् ॥
वैचित्र्यं च शरीरादेस्तस्यैवेच्छाविजृम्भितम् ।
तद्विकल्पेन नानात्वं ज्ञेयं तत्पादुकास्वपि ॥

( ४ )

[2]जगतो रञ्जनाद् राजा साक्षाद् देवो महेश्वरः ।
तत्पुत्रा राजपुत्राः स्युः ...................... ॥ १२३५

( ५ )

[3]भासा च नाम प्रतिभा महती सर्वगर्भिणी ।
स्वस्वभावशिवैकात्मदेशिकात्मकचिन्मयी ॥
यस्यां हि भित्तिभूतायां मातृमेयात्मकं जगत् ।
प्रतिबिम्बतया भाति नगरादीव दर्पणे ॥
स्वातन्त्र्यरूपा सा काचिच्चिच्छक्तिः परमेष्ठिनः । १२४०
तन्मयो भगवान् देवो गुरुर्गुरुमयी च सा ॥

---

१. म० म० प०, पृ० ९९
२. म० म० प०, पृ० १०३
३. म० म० प०, पृ० १०५

# पूजारहस्यम्

( १ )

[1]औन्मुख्यमिच्छा ज्ञानं च क्रियेत्येतच्चतुष्टयम् ।
स्पन्दनं देवदेवस्य बोधभैरवरूपिणः ॥
औदासीन्यप्रहाणेन यदौन्मुख्यं महेशितुः ।
तदिदं स्याज्जगत् सर्वमित्यस्मिन् किं नु युक्तिभिः ॥ १२४५

# पौष्करागमः

( १ )

[2]चिन्तामणौ स्वरूपेण न किञ्चिदुपलभ्यते ।
अथ चाभिमतं सूते ब्रह्मैवं सर्वशक्तिकम् ॥

( २ )

[3]अदृष्टविभवाच्छान्ताच्छिवात् परमकारणात् ।
नादरूपं विनिष्क्रान्तं शास्त्रम्········॥

( ३ )

[4]सदाशिवोऽपि भगवान् नादरूपतयागतम् । १२५०
षट्पदार्थमयं ज्ञानमनेकच्छद एव तत् ॥

( ४ )

[5]वागिन्द्रियानपेक्षस्य शक्तिः सर्वत्र निःसृता ।
अत्यन्तविमलत्वेन तया वक्ति किमद्भुतम् ॥

---

१. म० म० प०, पृ० ४२
२. स्प० प्र०, पृ० ३
३. श० र० सं०, पृ० ७
४. श० र० सं०, पृ० ८
५. श० र० सं०, पृ० ८

( ५ )

[1]तेनोक्तं परमेशेन श्रीकण्ठाय महात्मने ।
श्रीकण्ठाद्ब्वयो लब्धास्तेभ्यो लब्धाः सुमानवाः ॥ १२५५

( ६ )

[2]ज्ञानक्रिये शिवे प्रोक्ते सर्वार्थे निर्मले परे ।

( ७ )

[3]साधकस्य तु लक्ष्यार्थं तस्य रूपमिदं स्मृतम् ।

( ८ )

[4]अदेहस्यापि कर्तृत्वं स्वदेहप्रेरणे यथा ।

( ९ )

[5]लयभोगाधिकाराणां न भेदो वास्तवः शिवे ।
किन्तु बिन्दोरणूनां च वास्तवा एव ते मताः ॥ १२६०

( १० )

[6]मायापि नात्रोपादानं मोहकत्वात् स्वतेजसा ।

( ११ )

[7]निमित्तमीश्वरस्तेषामुपादानं स बिन्दुराट् ।
नृकर्म सहकारी स्यात् कार्यमेतत् त्रिहेतुकम् ॥

---

१. श० र० सं०, पृ० १२
२. श० र० सं०, पृ० १९
३. श० र० सं०, पृ० २०
४. श० र० सं०, पृ० २१
५. श० र० सं०, पृ० २३
६. श० र० सं०, पृ० २५
७. श० र० सं०, पृ० २५

( १२ )

[1]सर्वंकार्यं यतः कर्तुर्भावमालोच्य वस्तुगम् ।
प्रवृत्तिर्दृश्यते यस्मात् स भावः सत्त्ववाचकः ॥ १२६५
तेन तत्प्राक् चितेर्भावः कर्मवत् किं न मन्यसे ।

( १३ )

[2]उभयोः कृषिसाम्येऽपि कश्चिद् धान्यानि गच्छति ।
न किञ्चिदपरस्तस्य कर्म कारणकं द्विजाः ॥

( १४ )

[3]पक्षधर्मः सपक्षे सद् व्यावृत्तश्च विपक्षतः ।
अबाधोऽसत्प्रतिपक्षो व्यतिरेकान्वयात्मकः ॥ १२७०

( १५ )

[4]प्रलयेऽप्यनुगृह्णाति सृजत्यवति हन्ति च ।
तिरोदधाति भगवान् न कालापेक्षया सदा ॥

( १६ )

[5]प्रवर्तमानो देहादिश्चेतनाऽधिष्ठितः सदा ।
स्वतः प्रवृत्तिशून्यत्वाज्जडत्वेन पटादिवत् ॥
यस्तु प्रवर्तकः सोऽयमात्मेति परिपठ्यते । १२७५

( १७ )

[6]पशुः पशुत्वसंयोगान्न मुक्तः पशुरुच्यते ।

---

१. श० र० सं०, पृ० २५
२. श० र० सं०, पृ० २५
३. श० र० सं०, पृ० २६
४. श० र० सं०, पृ० ३१
५. श० र० सं०, पृ० ३५
६. श० र० सं०, पृ० ३६

( १८ )

[1]यस्मात् स्वदृक् क्रियाशालिकलाहीनोऽप्यनीश्वरः ।
व्यापकश्चिन्मयः सूक्ष्मः शिववत् संव्यवस्थितः ॥

( १९ )

[2]परा वागीश्वरी विद्या मायाऽविद्याऽपरा स्मृता ।

( २० )

[3]शिवे कर्तरि तादात्म्यान्नेयं कुण्डलिनी स्थिता । १२८०
उपादानत्वतो हेतोः कुलाले मृत्तिका यथा ॥

( २१ )

[4]मायापि मात्रोपादानं मोहकत्वात् स्वतेजसा ।
यतः प्रबुद्धपुंस्काय करणानां न कारणम् ॥
शुद्धाध्ववर्तिनः सर्वे प्रबुद्धाः शिवतेजसा ।
तस्माच्छुद्धाध्वनश्चा(स्त)स्य स्वानुकार्येव कारणम् ॥ १२८५
इष्यतां कुण्डलिन्याख्यं शुद्धमेतद् द्विजोत्तमाः ।

( २२ )

[5]किञ्च रुद्राणवो येन बध्यन्ते यत्र वा स्थिताः ।
विमुच्यन्ते यतो वाऽयं स बिन्दुरिति गम्यताम् ॥

( २३ )

[6]वृत्तिस्तत्त्वात्मिका चास्य चतुर्थी संव्यवस्थिता ।
शिवतत्त्वं सदेशाख्यमीशं विद्याह्वयं तथा ॥ १२९०
शुद्धान्येतानि तत्त्वानि रुद्राणूनां महात्मनाम् ।

---

१. श० र० सं०, पृ० ३६
२. श० र० सं०, पृ० ४०
३. श० र० सं०, पृ० ४०
४. श० र० सं०, पृ० ४०
५. श० र० सं०, पृ० ४१
६. श० र० सं०, पृ० ४४

( २४ )

[1]मयत्यस्माद् जगत् सर्वं तेन माया समीरिता।

( २५ )

[2]तन्मात्राणि पृथिव्यादेः सूक्ष्माण्येभ्यस्त्वहङ्कृतिः।
तस्याः सूक्ष्मतरा बुद्धिस्तस्याः प्रकृतिरेव च॥
तस्याः कलादिवर्गश्च माया सूक्ष्मतरा ततः। १२९५
यत्र सौक्ष्म्यपराकाष्ठा सा मायेत्यभिधीयते॥

( २६ )

[3]क्षोभकोऽत्र महातेजाः श्रीकण्ठोऽनन्तविक्रमः।
प्रबुद्धः परमेशानः शक्तिसम्पर्कमात्रतः॥
गुणादिक्षितिपर्यन्तं तत्त्वजातं यतो भवेत्।

( २७ )

[4]नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। १३००

( २८ )

[5]कर्मनाशाद् मलस्यापि विपाके सहकारिणी।
पतत्युन्मीलनी शक्तिस्तदानुग्रहरूपिणी॥

( २९ )

[6]वैराग्यं जायते क्षिप्रं संसाराद् दुःखसागरात्।
दिदृक्षा जायते शम्भोः पादपङ्कजयोरपि॥

---

१. श० र० सं०, पृ० ४६
२. श० र० सं०, पृ० ४८
३. श० र० सं०, पृ० ५१
४. श० र० सं०, पृ० ५७
५. श० र० सं०, पृ० ६५
६. श० र० सं०, पृ० ६७

कदा द्रक्ष्यामि देवेशं मोक्ष्येऽहं बन्धतः कदा । १३०५
को वा दर्शयिता शम्भोरिति संजायते मतिः ॥
एवं संसारतो भीतमनुगृह्णाति चेश्वरः ॥

( ३० )

[1]दीक्षैव मोचयेत् पाशान् शिवत्वं च ददात्यणोः ।

( ३१ )

[2]शिवस्य समवेता या शक्तिर्ज्ञानात्मिकाऽमला ।
सैव ज्ञानमिति प्रोक्तं शास्त्रं तदनुमापकम् ॥ १३१०

( ३२ )

[3]साधकस्य तु लक्ष्या(रक्षा)र्थं तस्य रूपमिदं स्मृतम् ।
सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ॥

( ३३ )

[4]न मोक्षं याति पुरुषः स्वसामर्थ्यात् कदाचन ।
मुक्त्वा प्रसादं देवस्य शिवस्याऽशिवहारिणः ॥

---

१. श० र० सं०, पृ० ७०
२. श० र० सं०, पृ० ७४
३. श० र० सं०, पृ० ७५
४. श० र० सं०, पृ० ७९

## प्रबोधपञ्चदशिका

( १ )

[1]तस्या भोक्त्र्याः स्वतन्त्राया भोग्यैकीकार एष यः । १३१५
स एव भोगः सा मुक्तिः स एव परमं पदम् ॥

## प्रभाकौलम्

( १ )

[2]वामे वीराः समाख्याताः ।

( २ )

[3]यावत् तत् परमं शान्तं न विजानन्ति सुन्दरि ।
तावत् पूजाजपध्यानहोमलिङ्गार्चनादिकम् ॥
विदिते तु परे तत्त्वे सर्वाकारे निरामये । १३२०
क्व पूजा क्व जपो होमः क्व च लिङ्गपरिग्रहः ॥

( ३ )

[4]पश्य मोहस्य माहात्म्यं स्वहृदिस्थेऽपि शङ्करे ।
लिङ्गस्थण्डिलवह्न्यप्सु वीक्षयन्ति यथा शिवम् ॥

---

१. म० म० प०, पृ० १३४
२. म० म० प०, पृ० ७१
३. म० म० प०, पृ० १११
४. म० म० प०, पृ० १२३

# प्रमाणस्तुतिः

( १ )

[1]धर्माधर्मव्याप्तिविनाशान्तरकाले
शक्तः पातो गाहनिकैर्यः प्रतिपन्नः । १३२५
तं स्वेच्छातः संगिरमाणाः स्तवकाद्याः
स्वातन्त्र्यं तत्त्वय्यनपेक्षं कथयेयुः ॥



# बौद्धायनसंहिता

( १ )

[2]कार्यकारणभावस्तु नास्ति ज्ञाने क्षणक्षयः ।
क्षणं द्वितीयं नास्ते चेत् स्मृतिबीजं कथं भवेत् ॥
जनकं तत्कथं नष्टमनष्टं वाप्यनष्टकम् । १३३०
नष्टस्य जनकत्वं चेदभावाद् भावसन्ततिः ॥
जनकत्वे त्वनष्टस्य क्षणभङ्गः प्रहीयते ।
द्वितीयं यत्क्षणं तिष्ठेत् तदास्ते शतमप्यथ ॥
जनकत्वेऽर्थनिष्ठस्य अर्थे नाऽभावमेति तत् ।
तस्माद् भावाः स्थिराः सर्वे न च्यवन्ते स्वरूपतः ॥ १३३५
आत्मावबोधविषये स्वस्थिराः क्षणिका न ते ।
बाध्यबाधकभावोऽपि न स्यान्निश्चायकं विना ॥
शुक्तौ हि रजतज्ञानभ्रान्तिभङ्गोऽस्ति नान्यथा ।
तस्माज्ज्ञानं नित्यमेकं क्षणिकानि बहूनि नो ॥

---

१. त० आ० १३ । १२८; पृ० ८५
२. स्प० प्र०, पृ० १५

( २ )

[1]शान्ते चन्द्रे त्वमात्राख्ये यावन्नोच्चरते रविः । १३४०
उदयः सर्वमन्त्राणां विलयश्च दिवौकसाम् ॥

## ब्रह्मयामलम्

( १ )

[2]मातृमण्डलसंबोधात् संस्कारात् तपसः प्रिये ॥
ध्यानाद्योगाज्जपाज्ज्ञानान्मन्त्राराधनतो व्रतात् ।
संप्राप्यं कुलसामान्यं ज्ञानं कौलिकसिद्धिदम् ॥

( २ )

[3]तत्रैव चोक्तं सेवायां कृतायामविकल्पतः ॥ १३४५
साधकस्य न चेत् सिद्धिः किं कार्यमिति चोदिते ।
आत्मीयमस्य संज्ञानक्रमेण स्वात्मदीक्षणम् ॥
सस्फुरत्वप्रसिद्ध्यर्थं ततः साध्यं प्रसिद्ध्यति ।
अनेन स्वात्मविज्ञानं सस्फुरत्वप्रसाधकम् ॥
उक्तं मुख्यतयाऽऽचार्यो भवेद्यदि न सस्फुरः । १३५०
तत्रैव च पुनः श्रीमद्रक्ताराधनकर्मणि ॥
विधिं प्रोक्तं सदा कुर्वन् मासेनाचार्य उच्यते ।
पक्षेण साधकोऽर्धार्धात् पुत्रकः समयी तथा ॥

( ३ )

[4]संशयानो न सिद्ध्यति ।

---

१. स्प० प्र०, पृ० ३२
२. त० आ० ४ । ५७-५८; पृ० ६४
३. त० आ० ४ । ६०-६४; पृ० ६७–७०
४. त० आ० वि० ४।६०; पृ० ६७

( ४ )

[1]जुहोति जपति प्रेद्धे सर्वत्रैवात्र चण्डिका । १३५५

( ५ )

[2]नदते दशधा सा तु दिव्यानन्दप्रदायिका ।
चिनीति प्रथमः शब्दश्चिञ्चिनीति द्वितीयकः ॥
चीरवाकी तृतीयस्तु शङ्खशब्दश्चतुर्थकः ।
तन्त्रीघोषः पञ्चमश्च षष्ठो वंशरवस्तथा ॥
सप्तमः कांस्यतालस्तु मेघशब्दरवस्तथा । १३६०
नवमो दावनिर्घोषो दशमो दुन्दुभिस्वनः ॥
नवशब्दान् परित्यज्य दशमो मोक्षदायकः ।
अनेन विधिना येन व्याहरेद् दशधा रवम् ॥

( ६ )

[3]नाध्यात्मेन विना बाह्यं नाध्यात्मं बाह्यवर्जितम् ।
सिद्ध्येज्ज्ञानक्रियाभ्यां तद् द्वितीयं संप्रकाशते ॥ १३६५
श्रीब्रह्मयामले देव इति तेन न्यरूपयत् ।

( ७ )

[4]श्रीब्रह्मयामले चोक्तं संक्षिप्तेऽपि हि भावयेत् ।
व्याप्तिं सर्वाध्वसामान्यां किन्तु यागे न विस्तरः ॥

( ८ )

[5]नित्याद्यल्पाल्पकं कुर्याद्यदुक्तं ब्रह्मयामले ॥
चीर्णविद्याव्रतः सर्वं मनसा वा स्मरेत् प्रिये । १३७०

---

१. त० आ० वि० ४ । ६५; पृ० ७१
२. त० आ० वि० ५ । ९९; पृ० ४१०
३. त० आ० १५ । ४३-४४; पृ० २७
४. त० आ० १८ । ९; पृ० १८०
५. त० आ० २३ । ४३-४४; पृ० २७९

( ९ )

[1]श्रीब्रह्मयामलेऽप्युक्तं पात्रं गोमुखमुत्तमम् ।
गजकूर्मतलं कुम्भवृत्तशक्तिकजाकृति ॥

( १० )

[2]प्रायश्चित्तं प्रकर्तव्यमिति श्रीब्रह्मयामले ।

( ११ )

[3]लक्षजापं ततः कुर्यादित्युक्तं ब्रह्मयामले ॥

( १२ )

[4]श्रीब्रह्मयामलेऽप्युक्तं सुरा शिवरसो बहिः । १३७५
तां विना भुक्तिमुक्ती नो पिष्टक्षौद्रगुडैस्तु सा ॥

## भर्गशिखा

( १ )

[5]मृत्युं च कालं च कलाकलापं
विकारजातं प्रतिपत्तिसात्म्यम् ।
ऐकात्म्यनानात्म्यवितर्कजातं
तदा स सर्वं कवलीकरोति ॥ १३८०

( २ )

[6]न सन्न चासत् सदसन्न च तन्नोभयोज्झितम् ।
दुर्विज्ञेया हि सावस्था किमप्येतदनुत्तरम् ॥

---

१. त० आ० २७ । २९; पृ० ३६८

२. त० आ० २८ । ४१९; पृ० १७८

३. त० आ० २८ । ४२३; पृ० १८०

४. त० आ० २९ । ११; पृ० ८

५. शि० वि०, पृ० २१–२२; त० आ० वि० ४ । २५५; पृ० २८४

६. त० आ० २ । २८–२९; पृ० २२–२३

अयमित्यवभासो हि यो भावोऽवच्छिदात्मकः ।
स एव घटवल्लोके संस्तथा नैष भैरवः ॥

( ३ )

[1]वीरव्रतं चाभिनन्देद्यथायोगं तथाभ्यसेत् । १३८५

( ४ )

[2]वामाचारपरो मन्त्री तती यागं समाचरेत् ।

( ५ )

[3]अष्टधेत्थं वर्णिता श्रीभर्गाष्टकशिखाकुले ॥



## भैरवकुलम्

( १ )

[4]होत्री दीक्षा तु सिद्धान्ते तन्त्रे योजनिका स्मृता ।
त्रिके समावेशवती कुले स्तोभात्मिका मता ॥
सामरस्यमयी कौले दीक्षा पञ्चविधोदिता । १३९०
वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित् ॥
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः ।
यतः शिवोद्भवाः सर्वे शिवधामफलप्रदाः ॥



---

१. परा० अभि०, पृ० २३५; त० आ० वि० १२ । २०; पृ० १०३

२. त० आ० वि० १५ । २८०; पृ० १३८

३. त० आ० ३२ । ६२; पृ० ३११

४. त० आ० वि० १३ । ३०२; पृ० १८२–८३

# भैरवयामलम्

( १ )

[1]शिवात्मके महामञ्चे महेशानोपबर्हिणि ।
अतिरम्यतले तत्र कशिपुश्च सदाशिवः ॥ १३९५
भूतकाश्च चतुष्पादा महेन्द्रश्च पतद्ग्रहः ।
तत्रास्ते परमेशानी महात्रिपुरसुन्दरी ॥

( २ )

[2]बिन्दुस्थानं सुधासिन्धुः पञ्चयोन्यः सुरद्रुमाः ।
तत्रैव नीपश्रेणी च तन्मध्ये मणिमण्टपम् ॥
तत्र चिन्तामणिकृतं देव्या मन्दिरमुत्तमम् । १४००
शिवात्मके महामञ्चे महेशानोपबर्हणे ॥
अतिरम्यतरे तत्र कशिपुश्च सदाशिवः ।
भूतकाश्च चतुष्पादा महेन्द्रश्च पतद्ग्रहः ॥
तत्रास्ते परमेशानी महात्रिपुरसुन्दरी ।
शिवार्कमण्डलं भित्वा द्रावयन्तीन्दुमण्डलम् ॥ १४०५
तदुद्भूतामृतस्यन्दिपरमानन्दनन्दिता ।
कुलयोषित् कुलं त्यक्त्वा परं वर्षणमेत्य सा ॥

( ३ )

[3]अष्टोत्तरशतं वह्नेः षोडशोत्तरकं रवेः ।
षट्त्रिंशदुत्तरशतं चन्द्रस्य च विनिर्णयः ॥

---

१. सौ० ल० अरु०, पृ० ३६
२. सौ० ल० लक्ष्मी०, पृ० ६४–६५; सौ० ल० अरु०, पृ० ६७
३. सौ० ल० लक्ष्मी०, पृ० ९९

# भोगमोक्षप्रदीपिका

( १ )

[1]कामाख्ये विषतत्त्वे निरञ्जनाह्वे क्रमाच्च सिद्धिः स्यात् । १४१०
सूर्ये सोमे हृद्यात्तयोः शमाच्चेति शास्त्रसर्वस्वम् ॥

( २ )

[2]उद्यन्त्रिता बलेन तु विकासवृत्त्या स्वरूपगस्तिष्ठेत् ।
स्वयमुपसृतेन्द्रियार्थानश्नन्नानन्दभूमिगो योगी ॥
एषोच्छृङ्खलरूपा विकस्वरतरा प्रबुद्धबुद्धीनाम् ।
सिद्धाः स्थिताः सदाऽस्यां ह्यानन्दरताः परा च मुद्रैषा ॥ १४१५

( ३ )

[3]अथवा विभागबोधज्वलनेन विलाप्य वेद्यपीयूषम् ।
पीत्वा तृप्तो विचरेन्नीरोगो योऽचिरात् सदैकाकी ॥
यत्क्रमार्थसारं परधाराभूमिका च शक्तीनाम् ।
तदनुज्ञयाऽत्र कथितं सच्छिष्यविबोधनाय यथा ॥

# मतङ्गसूत्रम्

( १ )

[4]शान्त्यतीतं परं तत्त्वमविनाश्यव्यया (शिवा) त्मकम् । १४२०
येनोन्मीलितसद्भावाः (सामर्थ्यात्) पशवः शिवतां गताः ॥
सदाशिवस्य देह( व )स्य लयस्तत्त्वेऽतिनिष्कले ।
चतुर्मूर्तिमयं शुभ्रं यत् तत् सकलनिष्कलम् ॥

---

१. स्प० प्र०, पृ० ३२
२. स्प० प्र०, पृ० ४९
३. स्प० प्र०, पृ० ४९-५०
४. श० र० सं०, पृ० २३

तस्मिन् भोगः समुद्दिष्टः पत्युर्विश्वस्य सर्वदा ।
अथाऽधिकारिणः पत्युः क्रीडतः परमं पदम् ॥ १४२५
स्वतन्त्रस्यापि वक्तव्यं स्वभावोऽस्य यतः पुरा ।
तथा शिवैकरूपं च स्यान्नटे बहुरूपवत् ॥

( २ )

[1]मोक्षः सप्तप्रकारोऽयं विभागेनोपवर्णितः ।
एभ्यो ह्येकः परः सूक्ष्मः कार्यकारणगोचरः ॥
अतीतः परिपूर्णश्च स्वतन्त्रः सर्वतोमुखः । १४३०
एको निरीश्वरः स्वस्थः षडन्ये सेश्वरा मताः ॥
संरुद्धशक्तयश्चान्ये स्थूलभेदाः प्रकीर्तिताः ।
यान् विमोचयति स्वापे शिवाः सद्यो भवन्ति ते ॥
संहृतौ वा समुद्भूता अणवः पतयोऽथवा ।

( ३ )

[2]प्राधान्येन स्थिता ह्येता विद्या मन्त्राश्च सुव्रत । १४३५
एकाशीतिपदा देवी या सा शक्तिः शिवात्मिका ॥
शा(न्तौ)न्ताद् विनिर्गता पूर्वस्थानं तस्यास्तदात्मकम् ।
लये च शिवतत्त्वाख्यं व्यक्तौ बिन्द्वा(त्मकं)ह्वयं परम् ॥
भो(गः)गे सदाशिवस्था(ने)नं ईश्वराख्ये च शासने ।
विद्यातत्त्वेऽधिकारः स्याद् योनिर्ज्ञेया सदैव हि ॥ १४४०
तस्यामेव स्थिता मन्त्रा विद्याश्च विविधा मुने ।
इयं तावन्महाशक्तिः शिवस्य परमात्मनः ॥

( ४ )

[3]विद्या भानुमती नाम भासुरप्रतिमा तु सा ।
ततोऽन्यापि महाभागा रौद्री रौद्रेण कर्मणा ॥

---

१. श० र० सं०, पृ० २९
२. श० र० सं०, पृ० ४२
३. श० र० सं०, पृ० ४३

विश्वा च काली कापाली विद्याऽन्यापि महोदया । १४४५
सुखोदयाऽन्या विख्याता तथा वज्रीति कीर्तिता ॥
अष्टावेता यशस्विन्यो विद्येशानां महात्मनाम् ।
क्रीडनार्थं विलासिन्यः पशूनां पाशमोचिकाः ॥

( ५ )

[1]ब्रह्माण्यङ्गानि यानि स्युस्तानि सादाख्यगोचरे ।
नादो बिन्दुः सकलः सादाख्यं तन्त्रमाश्रितौ कथितौ ॥ १४५०

( ६ )

[2]मेरुपृष्ठं यथा प्राप्तास्तृणलोष्टादयो भृशम् ।
प्राप्नुवन्ति सुवर्णत्वं तद्वत् सादाशिवे पदे ॥

( ७ )

[3]स्थितये सर्वभूतानां शरीराण्यसृजत् पुरा ।
स्थूलानि तद्विशिष्टानि सृष्टवान् भूतनायकः ॥

( ८ )

[4]क्षोभितोऽनन्तनाथेन ग्रन्थिर्मायात्मको यदा । १४५५
तदा स्वेन विकारेण तनो(करो)ति विपुलं जगत् ॥

( ९ )

[5]जातिभेदाद् रूपभेदाच्छौर्यविज्ञानभेदतः ।
सौभाग्यभेदतश्चापि दौर्भाग्येन च लक्ष्यते ॥
एवं मध्योत्तमाद् भोगात् कनिष्ठाच्चैव भेदतः ।

---

१. श० र० सं०, पृ० ४३
२. श० र० सं०, पृ० ४३
३. श० र० सं०, पृ० ५१
४. श० र० सं०, पृ० ५१
५. श० र० सं०, पृ० ५४

न्यूनं न्यूनतमानि स्युः श्रेष्ठं श्रेष्ठतमानि च ॥ १४६०
पशूनामुपसर्पन्ति विभागांस्तेष्वथोच्यते ।

( १० )

[1]लोकेऽपि सुप्रतीतं स्याद् द्विविधं कर्म कर्मिणाम् ।
क्रियावसानिकं दृष्टमदृष्टं तत्र संक्षये ॥

( ११ )

[2]तन्निपाताच्च तस्येत्थमज्ञस्याप्यभिलाषिणः ।
बुद्धिरुत्पद्यतेऽकस्माद् विवेकेनात्मवर्तिना ॥ १४६५

( १२ )

[3]प्रेरणे प्रेरकः श्रीमान् द्वयोरपि स मन्त्रराट् ।
अनुग्राह्यस्य विनये तथाऽनुग्राहकस्य च ॥
कारुण्ये त्वनयोर्यस्मात् तयोर्योगः सुदुर्लभः ।

( १३ )

[4]योगवीर्यबलोपेता दीक्षया वा नियोजिताः ।
सदाशिवसमाः सर्वे न चैके कारणेश्वराः ॥ १४७०
न शिवत्वमनुप्राप्तास्तेषां कर्मोच्यतेऽधुना ।
सामीपयाः शान्तिनिलया ज्ञानकेवलिनो मताः ॥
सालोक्याश्चैव विद्यायां येऽप्यधः परिपिण्डिताः ।
योगकेवलिनस्तेऽपि तन्त्रेऽस्मिन् परिभाषिताः ॥

---

१. श० र० सं०, पृ० ५५
२. श० र० सं०, पृ० ६६
३. श० र० सं०, पृ० ६७
४. श० र० सं०, पृ० ७७-७८

सान्निध्यात् तु प्रतिष्ठायां शक्तिकेवलिनो मताः । १४७५
काम्याश्चैव निवृत्तिस्था मूर्तिकेवलिनः स्मृताः ॥
नादाख्ये चैव ये तत्त्वे संस्थिताः परमाणवः ।
मूर्तिकेवलिनस्तेऽपि शेषा रुद्राः प्रकीर्तिताः ॥

( १४ )

[1]अनयोः शासने सिद्धा दीक्षा क्षपणदानयोः ।

( १५ )

[2]दीक्षानलप्लुष्टमलस्य जन्तोः १४८०
स्वाक्यं बलं व्यक्तिमुपैति योगात् ।
शक्त्या विभोश्चुम्बितहृत्प्रदेशो
नान्येन पुंसो विनिवृत्तिमेति ॥

( १६ )

[3]समत्वधर्मव्यापारः कष्टोऽयं स्यात् सुदुष्करः ।



## मतदेवः

( १ )

[4]यस्येच्छातः सतां देवि जीवन्मुक्तिः क्षणाद् भवेत् । १४८५
तस्याहं वच्मि दिव्यौघं जीवन्मुक्तिप्रवृद्धये ॥



१. श० र० सं०, पृ० ७८
२. श० र० सं०, पृ० ८०
३. त० आ० वि० १२ । २८३; पृ० १७३
४. म० म० प०, पृ० १३५

## मनोऽनुशासनस्तोत्रम्

[1]हंसाः पतन्ति गगने प्रविसार्य पक्षौ
स्वौ सर्वदैव किल मानसराजहंस ।
अत्यद्भुता तव गतिर्गगने परस्मिन्
विक्षेपशून्यमयपक्षयुगं विहाय ॥ १४९०

( २ )

[2]स्वातन्त्र्यापरपर्यायमायाजाड्यविलापनात् ।
विलीय चिद्रसीभूतं विश्वानन्दमुपास्महे ॥

( ३ )

[3]स्तब्धदृष्टिबहिरर्थसंश्रयं निर्विकल्पमपि यत्तवासनम् ।
मुक्तपञ्जरशुकानुकारि तद् भैरवं वपुरुदारमाहर ॥

## महानयपद्धतिः

( १ )

[4]परमनिरावरणात्मनि रूपे यो दृढतरः परामर्शः । १४९५
पूजनमेतदितीत्थं प्रभुणा निरणायि यद्यपि प्रकृतम् ॥

## महाम्नायः

[5]यत्पीठचक्रार्चितपञ्चवाहप्रकाशमानन्दखमूर्तिचक्रम् ।
अष्टाष्टचक्रं प्रविराजते तद् गुरुक्रमौघं सचतुष्टयार्थम् ॥

---

१. म० म० प०, पृ० १३
२. म० म० प०, पृ० ४६
३. म० म० प०, पृ० ९४
४. म० म० प०, पृ० ११२
५. म० म० प०, पृ० ८६

## महाबलः

[1]यथार्थनाम्नः क्रोधे ।

## महार्थोदयः

( १ )

[2]अथ हव्यमिदन्ताख्यं हावं हावं स्वचिन्मुखे । १५००
उल्लङ्घ्य मायामालिन्यं स्वैरमासीत मेरुवत् ॥

## महास्वच्छन्दः

( १ )

[3]गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः ।
प्रश्नोत्तरपरैर्वाक्यैस्तन्त्रं समवतारयत् ॥

## महास्वच्छन्दसंग्रहः

[4]शब्दः शान्तत्वघोरत्वविशेषापन्नरूपकः ।
शब्दस्तु शब्दतन्मात्रं मृदूष्णकठिनश्चलः ॥ १५०५
विशिष्टस्पर्शरूपश्च स्पर्शतन्मात्रसंज्ञितः ।
नीलपीतत्वशुक्लत्वविशिष्टं रूपमेव च ॥

---

१. स्प० प्र०, पृ० ३
२. म० म० प०, पृ० १३२
३. यो० दी०, पृ० २
४. यो० दी०, पृ० १३३

रूपतन्मात्रमित्युक्तं मधुरत्वादिसंयुतम् ।
रसतन्मात्रसंज्ञं तु सौरभ्यादिविशेषितः ॥
गन्धः स्याद् गन्धतन्मात्रं तेभ्यो वै भूतपञ्चकम् । १५१०
आकाशः शब्दतन्मात्रं नित्यं शब्दगुणं महत् ॥
व्यापकं निर्मलं तत्त्वमवकाशप्रदानकम् ।
स्पर्शतन्मात्रतो वायुश्चलद्रूपोऽनिलोऽभवत् ॥
जगत्प्राणोऽनिलो व्यूहप्रेरणं च लघुर्भवेत् ।
शब्दस्पर्शगुणः प्रोक्तो गमनागमनकर्मकृत् ॥ १५१५
शब्दस्पर्शरूपगुणं तेजस्तत्त्वं प्रभास्वरम् ।
रूपतन्मात्रकार्यं च पाककर्मकरं शिवे ॥
रसतन्मात्रतो जातं वारितत्त्वं द्रवात्मकम् ।
शब्दस्पर्शरूपरसगुणसंग्रहकर्मकृत् ॥
शब्दस्पर्शरूपरसगन्धपञ्चगुणान्वितम् । १५२०
पृथिवीतत्त्वमाख्यातं कठिनं सर्वधारणम् ॥
पृथिव्यादिव्योमतत्त्वान्तपञ्चकं पूर्वपूर्वकम् ।
कार्यं सृष्ट्या समावृत्त्य वर्तते पञ्चकं क्रमात् ॥

## मातृकाहृदयम्

(१)

[1]ककारादिक्षकारान्ता वर्णास्ते शिवरूपिणः ।
समस्तव्यस्तरूपेण षट्त्रिंशत्तत्त्वविग्रहाः ॥ १५२५
अकारादिविसर्गान्ताः स्वराः षोडश शक्तयः ।
नित्याषोडशकात्मानः परस्परममी युताः ॥
शिवशक्तिमया वर्णाः शब्दार्थप्रतिपादकाः ।

१. सौ० ल० सौभा०, श्लो० १

शिवः स्वरपराधीनो न स्वतन्त्रः कदाप्यसौ ॥
स्वराः स्वतन्त्रा जायन्ते न शिवस्तु कदाचन । १५३०

## मानसोल्लासः

( १ )

[1]विष्णुः शिवः सुरज्येष्ठो मनुश्चन्द्रो धनाधिपः ।
लोपामुद्रा तथाऽगस्त्यः स्कन्दः कुसुमसायकः ॥
सुराधीशो रौहिणेयो दत्तात्रेयो महामुनिः ।
दुर्वासा इति विख्याता एते मुख्या उपासकाः ॥

( २ )

[2]येऽपि ब्रह्मादयो देवा भवन्ति वरदायिनः । १५३५
त्वद्रूपां शक्तिमासाद्य ते भवन्ति वरप्रदाः ॥
तस्मात् त्वमेव सर्वत्र कर्मणां फलदायिनी ॥

( ३ )

[3]हरं त्यक्त्वा हरिरभूद्धरिरेव तवाम्बिके ।
स्फुरच्छक्तिः पुनरभूदपरः सन्धियोगतः ॥

( ४ )

[4]सर्वतत्त्वात्मतेजोभिरिद्धं तव पदाम्बुजम् । १५४०
ध्यायेच्छिववरारोहे साक्षात् तेजोमयो भवेत् ॥

---

१. सौ० ल० सौभा०, श्लो० १; अरु०, पृ० २२
२. सौ० ल० सौभा०, श्लो० १
३. सौ० ल० सौभा०, श्लो० १
४. सौ० ल० सौभा०, श्लो० १४

( ५ )

[1]दशापञ्चकभेदेन प्रपञ्चस्य विलासिनः ।
साक्षिणी चाक्षरी यस्मात्तस्मात् पञ्चदशाक्षरी ॥

## मायावामनसंहिता

( १ )

[2]विष्णु-शिव-सूर्य-बुद्धादिरूपतया तत्तच्छक्तिचक्र-परिवारयुक्तस्तत्कारणं भगवानेक एव ध्यानभेदेनोपास्यत्वेनाभिहितः । १५४५

## मालिनीमतम्

( १ )

[3]एवमस्यात्मनः काले कस्मिंश्चिद् योग्यतावशात् ।
शैवी संबध्यते शक्तिः शान्ता मुक्तिफलप्रदा ॥
तत्संबन्धात्ततः कश्चित् तत्क्षणादपवृज्यते ।
अज्ञानेन सहैकत्वं कस्यचिद् विनिवर्तते ॥ १५५०
रुद्रशक्तिसमाविष्टः स यियासुः शिवेच्छया ।
भुक्तिमुक्तिप्रसिद्ध्यर्थं नीयते सद्गुरुं प्रति ॥
तमाराध्य ततस्तुष्टाद् दीक्षामासाद्य शाङ्करीम् ।
तत्क्षणाद् वोपभोगाद्वा देहपाताच्छिवं व्रजेत् ॥

---

१. सौ० ल० सौभा०, श्लो० ३२
२. स्प० प्र०, पृ० ११
३. त० आ० १३ । १९९–२०३; पृ० १२७–१२८

## मुकुटतन्त्रम्

( १ )

[1]श्रोतारः शिवभेदानां पारम्पर्यास्त्रयस्त्रयः । १५५५
द्वौ द्वौ तु रुद्रभेदानां षष्टिरुक्ता षडुत्तरा ॥

## मुख्याम्नायरहस्यविधिः

( १ )

[2]इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवताम् ।
स्वभावेन समाराध्य ज्ञातुः सोऽयं महामखः ॥

## मोक्षोपायः

( १ )

[3]स्वापरामर्शमात्रोऽयमपराधः क्रियानसौ ।
तावन्मात्रेण तज्जातं यद् वक्तुं नैव पार्यते ॥ १५६०

---

१. श० र० सं०, पृ० १०
२. यो० दी०, पृ० १९६, २७२
३. म० म० प०, पृ० २८

## योगपादः ( मतङ्गसूत्रीयः )

( १ )

[1]शेषवत् पूर्ववच्चान्यत् सामान्यमपरं स्मृतम् ।

( २ )

[2]स्थूलावृत्तशकृत्पुञ्जभूपृष्ठं मदगन्धि च ।
स्तम्भशय्यादिभिश्चिह्नै रत्रासीन्मत्तवारणः ॥
अतीतो ह्यनुमानेन साध्यः शेषवता बुधैः ।

( ३ )

[3]कृष्णाञ्जननिभैरुच्चैः सागोपैर्निबिडैर्घनैः । १५६५
निर्विघ्नैर्विपुलैः स्निग्धैस्तडिन्निर्घोषसंकुलैः ॥
प्रावृट्समयसम्प्राप्तैर्दृष्टैर्वृष्टिः प्रमीयते ।
एवं पूर्ववता साध्यमनुमानेन वृट् सदा ॥



## योगसंचरः

( १ )

[4]ये चक्षुर्मण्डले श्वेते प्रत्यक्षे परमेश्वरि ।
षोडशारं द्वादशारं तत्रस्थं चक्रमुत्तमम् ॥ १५७०

---

१. श० र० सं०, पृ० १२
२. श० र० सं०, पृ० १४
३. श० र० सं०, पृ० १४
४. त० आ० ४।१२७; पृ० १३६

( २ )

[1]षोडशातः समासेन श्रृणुष्वेकमना हर ।
सा सत्ता लीयते यस्याः काली द्व्यष्टकला स्मृता ॥

( ३ )

[2]प्रतिवारणवद् रक्ते तद्बहिर्ये तदुच्यते ।
द्वितीयं मध्यगे ये ते कृष्णश्वेते च मण्डले ॥
तदन्तर्ये स्थिते शुद्धे भिन्नाञ्जनसमप्रभे । १५७५
चतुर्दले तु ते ज्ञेये अग्नीषोमात्मके प्रिये ॥
मिथुनत्वे स्थिते ये च चक्रे द्वे परमेश्वरि ।
संमीलनोन्मीलनं ते अन्योन्यं विदधातके ॥

( ४ )

[3]मोक्षः सर्वप्रकाशनात् ।

( ५ )

[4]विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् । १५८०

( ६ )

[5]तथाहि योगसंचारे मन्त्राः स्युर्भुवि पार्थिवाः ।
आप्ये आप्या यावदमी शिवे शिवमया इति ॥

( ७ )

[6]चतुर्दशविधे भूते पुष्पे धूपे निवेदने ।
दीपे जपे तथा होमे सर्वत्रैवात्र चण्डिका ॥

---

१. त० आ० वि० ४।१२७; पृ० १३६
२. त० आ० ४।१२८-१३०; पृ० १३७-३८
३. त० आ० ६।५८; पृ० ५१
४. त० आ० वि० १३।२४२; पृ० १४९
५. त० आ० १५।६५; पृ० ३९
६. त० आ० १५।३९२-३९३; पृ० १९७

जुहोति जपति प्रेद्धे पूजयेद् विहसेद् व्रजेत् । १५८५
आहारे मैथुने सैव देहस्था कर्मकारिणी ॥

( ८ )

[1]योगचारे च यद्यत्र तन्त्रे चोदितमाचरेत् ।
तथैव सिद्धये सेयमाज्ञेति किल वर्णितम् ॥

( ९ )

[2]तत्र पर्वविधिं ब्रूमो द्विधा पर्व कुलाकुलम् ।
कुलाष्टककृतं पूर्वं प्रोक्तं श्रीयोगसंचरे ॥ १५९०

( १० )

[3]उक्तं श्रीयोगसंचारे स च चित्रस्वरूपकः ।

( ११ )

[4]उक्तं श्रीयोगसंचारे ब्रह्मचर्ये स्थितिं भजेत् ।

( १२ )

[5]श्रीयोगसंचरेऽपि च मुद्रेयं योगिनीप्रिया परमा ।

( १३ )

[6]अनया हि खचारी श्रीयोगसंचार उच्यते ।

---

१. त० आ० २३ । १२-१३; पृ० २६६
२. त० आ० २८ । १०; पृ० ६
३. त० आ० २९ । ८२; पृ० ५७
४. त० आ० २९ । ९७; पृ० ६४
५. त० आ० २९ । १५०; पृ० १०४
६. त० आ० ३२ । ३१; पृ० ३१७

( १४ )

[1]आनन्दं ब्रह्म तद्देहे त्रिधौष्ठ्यान्त्यव्यवस्थितम् । १५९५
अब्रह्मचारिणस्तस्य त्यागादानन्दवर्जिता ॥
आनन्दकृत्रिमाहारवर्जं चन्द्रस्य याजकाः ।
द्वयेऽपि नरके घोरे तस्मादेनां स्थितिं भजेत् ॥

---

## योगिनाथः

( १ )

[2]तदेवं त्वत्प्रवृत्त्या त्वन्निवृत्त्या चोदयेतरे ।
जुषन्ते येन तत्त्वानि तान्यतः स्पन्द एव ते ॥ १६००
वैसादृश्येऽपि कार्यस्याऽस्य च दृष्टान्तमाह यत् ।
ज्वलनाद्धूमोद्गतिरिव विविधाकृतिरम्बरे गता भाति ।
तद्वद् विष्णोः सृष्टिः स्वभावजा द्वैतरूपेयम् ॥
प्राश्यानश्छिद्रसस्यौघः साकारत्वमुपागतः ।
अवश्यायः प्रबोधार्के तूदिते स्वस्वभावभाक् ॥ १६०५

( २ )

[3]तस्मात् सर्वस्य सिद्धार्थं भारती कारणं परे ।
परेष्ट्या तदा रूपान्वेषणेनार्थनिश्चयात् ॥
तस्या औन्मुख्यवृत्त्यैव सद्भावपरिकल्पनात् ।
नहि तामन्तरेणैषा त्वमेताऽऽत्मानमम्बिके ॥

---

१. तन्त्रा० अभि०, पृ० १९८

२. स्प० प्र०, पृ० ५-६

३. स्प० प्र०, पृ० ३७

सा च तस्यामवस्थायां स्वरूपज्योतिरिष्यते । १६१०
निर्विभागक्रमापेक्षा योगिगम्यानुरूपिणी ॥
तत औन्मुख्यतश्चिन्तामयी भवति वाक् शिवे ।
विशिष्टशब्दविषयविवक्षास्फुरणात्मिका ॥
ततः शब्दात्मकत्वेन विवृत्तार्थमयी भवेत् ।
तदात्मतामन्तरेण यस्मान्नार्थावधारणम् ॥ १६१५

## रत्नत्रयम्

( १ )

[1]ज्ञानशक्त्या विजानाति क्रियया कुरुते जगत् ।

## रत्नमाला

( १ )

[2]यस्मिन् काले तु गुरुणा निर्विकल्पं प्रभाषितम् ।
तदैव किल मुक्तोऽसौ यन्त्रं तिष्ठति केवलम् ॥

( २ )

[3]अदृष्टं निर्गुणं यच्च हेयोपादेयवर्जितम् ।
तत्तत्त्वं सर्वतत्त्वानां प्रधानं परिपठ्यते ॥ १६२०
अदृष्टविग्रहश्चैव स शान्त इति गीयते ।
तस्येच्छा निर्गता शक्तिस्तद्धर्मगुणसंयुता ॥

१. शा० र० सं०, पृ० १६
२. म० म० प०, पृ० १७३
३. त० आ० वि० १ । २७४; पृ० २८२

( ३ )

[1]सृष्टिमार्गानुसारेण आयातश्चावनीतले ।
कथितो देवि षष्ठस्तु यथावेशस्वरूपतः ॥

( ४ )

[2]महानवान्तरो दिव्यो दिव्यादिव्यश्चतुर्थकः । १६२५
इतरेतरमार्गेण पञ्चधा भिन्नलक्षणम् ॥

( ५ )

[3]शिवस्य परिपूर्णस्य परस्यामिततेजसः ।
तच्छक्तिश्चैव सादाख्या स्वेच्छाकर्तृत्वगोचरा ॥
सत्त्वं तेन च संप्राप्तं संबन्धं प्रथमं विदुः ।
अवान्तरश्च योगेन सादाख्यात् क्रमशः पुनः ॥ १६३०
प्राप्तोऽनन्तेशदेवेन द्वितीयस्तेन कीर्तितः ।
तृतीयस्तु पुनर्देवि श्रीकण्ठो नन्दिना सह ॥
द्वाभ्यां देवात्तु मत्वैवं तेन दिव्यः प्रकीर्तितः ।
ऋषीणां च समासेन नन्दिना प्रतिपादितम् ॥
चतुर्थस्तु भगवता दिव्यादिव्यः प्रकीर्तितः । १६३५
व्याख्यानक्रमयोगेन विद्यापीठप्रपूजने ॥
शिष्याचार्यस्वरूपेण पञ्चमस्त्वितरेतरः ।
इति पञ्चप्रकारोऽयं संबन्धः परिकीर्तितः ॥

---

१. त० आ० वि० १ । २७४; पृ० २८२

२. त० आ० वि० १ । २७४; पृ० २८२

३. त० आ० वि० १ । २७४; पृ० २८२

## रसान्वयः

( १ )

[1]या चित् सत्तैव सा प्रोक्ता सा सत्तैव चिदुच्यते ।
यत्र चित्सत्तयोर्व्याप्तिस्तत्रानन्दो विराजते ॥ १६४०
यत्रानन्दो भवेद् भावे तत्र चित्सत्तयोः स्थितिः ।

## रहस्यशास्त्रम्

( १ )

[2]आदौ यस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैवायुधे स्थिता ॥

( २ )

[3]अत्र नाथः समाचारं पटलेऽष्टादशेऽभ्यधात् ।
नात्र शुद्धिर्न चाशुद्धिर्न भक्ष्यादिविचारणम् ॥ १६४५
न द्वैतं नापि चाद्वैतं लिङ्गपूजादिकं न च ।
न चापि तत्परित्यागो निष्परिग्रहतापि वा ॥
सपरिग्रहता वापि जटाभस्मादिसंग्रहः ।
तत्त्यागो न व्रतादीनां चरणाचरणं च यत् ॥
क्षेत्रादिसंप्रवेशश्च समयादिप्रपालनम् । १६५०
परस्वरूपलिङ्गादिनामगोत्रादिकं च यत् ॥
नास्मिन् विधीयते किञ्चिन्न चापि प्रतिषिध्यते ।
विहितं सर्वमेवात्र प्रतिषिद्धमथापि वा ॥

---

१. म० म० प०, पृ० ३५
२. वि० भै० वि०, श्लो० ७७
३. वि० भै० वि०, श्लो० १२३

किन्त्वेतदत्र देवेशि नियमेन विधीयते ।
तत्त्वे चेतः स्थिरीकार्यं सुप्रयत्नेन योगिना ॥ १६५५
तच्च गम्यं यथैव स्यात् स तथैव समाचरेत् ।
एतन्मनसि संधाय वशिष्ठेन स्फुटं कृतम् ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
तत्त्वे निश्चलचित्तस्तु भुञ्जानो विषयानपि ॥
न संस्पृश्येत दोषैः स पद्मपत्रमिवाम्भसा । १६६०

( अस्य योगिनः )

पेयापेयं स्मृता आपो भक्ष्याभक्ष्यं तु पार्थिवम् ॥
सुरूपं च विरूपं च तत्सर्वं तेज उच्यते ।
निर्दोषं हि समं ब्रह्म तत्स्फुटं नित्यमभ्यसेत् ॥
विषापहारिमन्त्रादिसंनद्धो भक्षयन्नपि ।
विषं न मुह्यते तेन तद्वद् योगी महामतिः ॥ १६६५
अशुद्धं हि कथं नाम देहाद्यं पाञ्चभौतिकम् ।
प्रकाशतातिरिक्ते किं शुद्ध्यशुद्धी हि वस्तुनि ॥

( ३ )

[1]शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयश्च जगत् सर्वं शक्तिमांस्तु महेश्वरः ॥

## रहस्यसिद्धिसोपानम्

( १ )

[2]कुण्डलिन्या महीभेदे योगी त्यजति मेदिनीम् । १६७०
सलिलस्थानयोगेन जले चलति योगवित् ॥

---

१. स्प० प्र०, पृ० १२
२. सौ० ल० सौभा०, श्लो० ९

वह्निभेदे जलमिव स्पृशत्यग्निं ज्वलच्छिखम् ।
मरुद्भेदे शीघ्रगतिर्याति क्रोशशतं क्षणात् ॥
व्योमभेदे खे चरति मनोभेदे मनोगतिः ।
यत्र कामयते तत्र याति लोकत्रयेऽपि च ॥ १६७५
संयोजयन् शिवपदे शिव एव प्रजायते ।
कर्ता हर्ता च सर्वत्र सुरासुरनमस्कृतः ॥

## रहस्यस्तोत्रम्

( १ )

[1]क्रोधहर्षविवशः परां दशा-
माश्रितोऽथ विमृशंश्च यः क्रियाम् ।
यत् स्पृशत्यनियतक्रियास्पदं १६८०
स्पन्दमात्मबलदं वदन्ति ते ॥
एषोऽन्यत्र त्रुटेः पातः प्रोक्तः सर्वज्ञतादिभाक् ।

( २ )

[2]स्वात्मनि स्तिमितसोमभास्करं
व्योममार्गमतिवर्त्य तस्थुषः ।
भावनाश्रितदृशोऽपि खेचराः १६८५
केचिदेव तत्र धामदर्शिनः ॥

( ३ )

[3]विस्मृतार्थमभियुज्य धीर्यथा
त्वामशेषविदमाशु शंसति ।

१. स्प० प्र०, पृ० ३१
२. स्प० प्र०, पृ० ३२
३. स्प० प्र०, पृ० ४३

यद्यदित्थमनयाऽर्थ्यते रसात्
स्वप्नगोऽपि न विलङ्घयिष्यसि ॥ १६९०

## रुद्ररहस्यम्

( १ )

[1]सर्वाधारा मही यस्मान्मूलाधारतया स्थिता ।
तदभावे तु देहस्य पातः स्यादुद्गमोऽपि वा ॥

## रौरवागमः

( १ )

[2]अधिकारं प्रकुर्वन्ति शिवेच्छाविधिचोदिताः ।

( २ )

[3]यथा प्रदीप्तज्वलने तूलराशिः समर्पितः ।
दग्धो निर्वाति स तत्र न भूयः स्थूलतां व्रजेत् ॥ १६९५
एवं वै मण्डलं प्राप्य दीक्षामन्त्रसमुद्भवम् ।
न पुनर्जन्मतां याति दीक्षितो मनुजोत्तमः ॥

१. सौ० ल० लक्ष्मी०, पृ० ६९; सौ० ल० अरु०, पृ० ७२
२. श० र० सं०, पृ० २९
३. श० र० सं०, पृ० ८२

## लक्ष्मीकौलार्णवः

( १ )

[१]दीक्षासिद्धौ तु ये प्रोक्ताः प्रत्ययाः स्तोभपूर्वकाः ।
संधानस्यैव ते देवि कलां नार्हन्ति षोडशीम् ॥

( २ )

[२]न संधानं विना दीक्षा न सिद्धीनां च साधनम् । १७००
न मन्त्रो मन्त्रयुक्तिश्च न योगाकर्षणं तथा ॥

( ३ )

[३]स्वयंभूर्भगवान् देवो जन्मसंस्कारवर्जितः ।
निर्विकल्पं परं धाम अनादिनिधनं शिवम् ॥
प्रत्यक्षं सर्वजन्तूनां न च पश्यति मोहितः ।

## लघुबृंहणी

( १ )

[४]बहिर्व्यवहरन् लोक्यान् स्थगयन्नूहगोचरान् । १७०५
चरन् कपटमार्गेण वामं नयमिवोन्नयेत् ॥

( २ )

[५]ब्रह्मायुषो दशगुणं विष्णोरायुः परं स्मृतम् ।
सहस्रगुणितं तस्माद् रुद्रस्यायुः परं किल ॥

---

१. शि० वि०, पृ० ३५
२. शि० वि०, पृ० ३९
३. शि० वि०, पृ० ८३
४. म० म० प०, पृ० १४४
५. म० म० प०, पृ० १७३

तस्माल्लक्षगुणं प्रोक्तमीश्वरस्यायुरुत्तमम् ।
तस्मात् सदाशिवस्यायुः प्रोक्तं कोटिगुणं बुधैः ॥ १७१०
समुद्रगुणितं तस्मात् शिवयोर्देहधारणम् ।

## वातुलोत्तरम्

( १ )

[1]त( चि )न्मयोऽन्तर्बहिश्चैव षट्त्रिंशत्तत्त्वमुक्तियुक् ।
यथार्थतः स देवो हि तत्त्वातीतः परः शिवः ॥

## वाजसनेयतन्त्रम्

( १ )

[2]या सा शक्तिः परा सूक्ष्मा व्यापिनी निर्मला शिवा ।
शक्तिचक्रस्य जननी परानन्दाऽमृतात्मिका ॥ १७१५
महाघोरेश्वरी चण्डा सृष्टिसंहारकारिका ।
त्रिवहं त्रिविधं त्रिस्थं बलात् कालं प्रकर्षति ॥

( २ )

[3]व्रतादौ च जपादौ च तयोरन्ते तथैव च ।
यागं कृत्वाथ विधिवत् स्वेन स्वमभिषेचयेत् ॥
यदि संपत्त्यभावः स्यान्मनसैव प्रकल्पयेत् । १७२०
यस्मादिदं जगत्सर्वं मनस्यन्तः प्रतिष्ठितम् ॥

---

१. श० र० सं०, पृ० ८०
२. शि० वि०, पृ० १३७
३. त० आ० वि० १३।१४०; पृ० ९४

ततः पीयूषकलशं कलाकमलमण्डितम् ।
ध्यात्वा शिरसि तेनैव प्लावितं भावयेद् बुधः ।।
अभिषिक्तो भवेदेवं न बाह्यकलशाम्बुभिः ।
य एवमभिषिक्तः सन् सोऽधिकारी जपादिके ।। १७२५

( ३ )

[१]इत्येतन्मातृकाचन्द्रं दिव्यं विष्णुपदास्पदम् ।
ज्ञानं गुरुमुखात् सम्यक् पशोः पाशान् निकृन्तति ।।

## वायवीयसंहिता

( १ )

[२]प्रधानपरमाण्वादि यावत् किञ्चिदचेतनम् ।
न तत् कर्तृ स्वयं दृष्टं बुद्धिमत्कारणं विना ।।
जगच्च कर्तृसापेक्षं कार्यं सावयवं यतः । १७३०
तस्मात् कार्यस्य कर्तृत्वं पत्युर्न पशुपाशयोः ।।

( २ )

[३]ज्ञानं वस्तुपरिच्छेदो वस्तु च त्रिविधं स्मृतम् ।

१. परा० अभि०, पृ० १५६

२. श० र० सं०, पृ० २६

३. श० र० सं०, पृ० ९३

## वार्तिककारः

( १ )

[1]स्वसंस्कारोचिताद् भोगादप्रच्यावः शरीरिणाम् ।
प्रोक्तं संरक्षणं नाम न्यायेन परिपालितम् ॥

—:०:—

## वासुदेवः

( १ )

[2]ऊर्ध्वशून्यमधः शून्यं मध्ये शून्यं निराश्रयम् । १७३५
त्रिशून्यं योऽभिजानाति स भवेत् कुलनन्दनः ॥

## विज्ञानेन्दुकौमुदी

( १ )

[3]मनो यत्रैव विश्रान्त्या पूर्णभावमुपाश्नुते ।
अतः परं हि किं नाम शुभक्षेत्रं भविष्यति ॥

( २ )

[4]सर्वव्यापकताभूमिर्ज्ञत्वकर्तृत्वसम्मता ।
निजाभासचमत्कारमयी शिवदशा स्मृता ॥ १७४०

---

१. श० र० सं०, पृ० २९
२. वि० भै० वि०, पृ० ४०
३. म० म० प०, पृ० २३
४. म० म० प०, पृ० ३९

## विद्याधिपतिः

(१)

[1]भक्षणप्रकृतिना समाधिना युक्तितो विषयधाम्नि भक्षिते ।
सर्वभक्षपदवीमुपेयुषः शिष्यते परमभक्षितो भवान् ॥
सा चेन्द्रजालिनो मायैवाऽऽस्थिता बाधकात्मनि ।
यथाऽग्नेर्धूमलेखेव मलवद् दर्पणस्य वा ॥
बुद्बुदाः सलिलस्येव तच्छान्तौ निर्विकारिता । १७४५

## विमर्शदीपिका

(१)

[2]विश्वात्म विश्वोत्तीर्णं च स्वतन्त्रं दिव्यमक्षरम् ।
अहमित्युत्तमं तत्त्वं समाविश्य बिभेति कः ॥

(२)

[3]स्वतन्त्रं परिपूर्णं च शिवाख्यं शून्यधाम तत् ।
तत्त्वानि यत्र लीयन्ते यस्मात् समुदयन्ति च ॥
तत्त्वेश्वरास्ततो जातास्तत्रैव निवसन्ति च । १७५०
क्षीयन्ते किल तत्रैव शिवाख्ये शून्यधामनि ॥
दर्शनान्तरदृष्टानि यानि शून्यान्तराण्यपि ।
तेषामुत्पत्तिविलयौ शिवशून्ये सदोदिते ॥
न तदस्ति न यत् तत्र न तदस्ति न यत्र तत् ।
अन्तर्बहीरूपतया ततोऽन्यन्नोपपद्यते ॥ १७५५

---

१. स्प० प्र०, पृ० २१

२. वि० भै० वि०, पृ० १०४

३. वि० भै० वि०, पृ० १२७

उपेयमितरन्नास्ति स्वातन्त्र्यात् परमे नये।
तदनादृत्य गाहन्ते सौगताः शून्यतां जडाः॥

## विवेकमार्तण्डः

(१)

[1]कपालकुहरे जिह्वा प्रविष्टा विपरीतगा।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी॥

## विश्वसंहिता

(१)

[2]ध्येये चित्तं यदा लीनं तदा ध्यानमुदाहृतम्। १७६०
ध्येयः प्रत्यक्षतां याति ध्याता तन्मयतां व्रजेत्॥
ऋच्छतास्त्वति पाठाद्वा ध्येयं चिन्तयतोऽत्र या।
तदाप्यतासमापत्तिरैक्यं तस्योदयः स तु॥

## विश्वसारोत्तरसूत्रम्

(१)

[3]धर्माधर्मात्मकं कर्म तच्च त्रिविधमर्थतः।
जात्यायुर्भोगदं येन नामिश्रं पच्यते क्वचित्॥ १७६५

---

१. वि० भै० वि०, श्लो० ८१
२. स्प० प्र०, पृ० ४१
३. श० र० सं०, पृ० ५४

## विषयपञ्चिका

( १ )

[1]मधुरसरसवीणावेणुगीतादिवाद्य-
श्रवणजनितहर्षः शब्दमात्रैकशेषः ।
तदनुभवविरामप्रस्फुरद्बोधमूर्ति-
र्भवविभवविमुक्तो मुक्तिमाप्नोति सम्यक् ॥

## विष्णुयामलम्

( १ )

[2]पाहि पाहीति वचनात् तत्त्राणात्तत्त्वविग्रहाः । १७७०
परापरबलस्पर्शात् स्वस्वरूपसमाश्रयात् ॥
निहता दानववराः परं वीर्यं प्रकाशितम् ।
तेन ता मातरः प्रोक्ता विश्वसम्भवकारणात् ॥

## वीरयामलम्

( १ )

[3]उत्क्रान्तिर्विद्यते यस्य तस्य स्यान्मानकल्पना ।
( मानं परिच्छेद इत्यर्थः )
अमाने शून्यनिर्भासे कस्योत्क्रान्तिः क्व च क्रमेत् ॥ १७७५
यदि सर्वगतो देवो वदोत्क्रम्य क्व यास्यति ।
अथाऽसर्वगतो देवो घटतुल्यस्तदा भवेत् ॥

१. म० म० प०, पृ० १५२
२. स्प० प्र०, पृ० ११
३. वि० भै० वि०, श्लो० १३८

# वीरावलिः

( १ )

[1]यत्र सर्वे लयं यान्ति दह्यन्ते तत्त्वसंचयाः ।
तां चितिं पश्य कायस्थां कालानलसमत्विषम् ॥

( २ )

[2]शशिभास्करसंयोगाज्जीवस्तन्मात्रतां व्रजेत् । १७८०
अत्र ब्रह्मादयो लीना मुक्तये मोक्षकाङ्क्षिणः ॥

( ३ )

[3]सत्यमेतन्महाप्राज्ञ प्राणायामो न कारणम् ।

( इत्युपक्रम्य )

प्राणायामो न कर्तव्यः शरीरं येन पीड्यते ॥

( ४ )

[4]अशुद्धं नास्ति तत्किञ्चित् सर्वं तत्र व्यवस्थितम् ।
यत्तेन रहितं किञ्चिदशुद्धं तेन जायते ॥ १७८५

( ५ )

[5]सर्वेषां वाहको जीवो नास्ति किञ्चिदजीवकम् ।
यत् किञ्चिद् जीवरहितमशुद्धं तद् विजानत ॥
तस्माद् यत् संविदो नातिदूरे तत् शुद्धिमावहेत् ।

---

१. शि० वि०, पृ० २२; त० आ० वि० ५ । १३०; पृ० ४३३
२. त० आ० वि० ४ । ९१; पृ० ९६
३. त० आ० वि० ४ । ९१; पृ० ९७
४. त० आ० वि० ४ । ११८; पृ० १२१; त० आ० वि० ४ । २४३; पृ० २६८
५. त० आ० ४ । २४२-२४३; पृ० २६६-६७

( ६ )

[1]ज्ञात्वा समरसं सर्वं दूषणादि पुनः कृतम् ।

( ७ )

[2]यत्ते कुर्युर्न तत्कुर्याद् यद् ब्रूयुस्तत्समाचरेत् । १७९०

( ८ )

[3]सितासितौ दीर्घह्रस्वौ धर्माधर्मौ दिनक्षपे ।
क्षीयेते यदि तद्दीक्षा व्याप्त्या ध्यानेन योगतः ॥
अहोरात्रः प्राणचारे कथितो मास उच्यते ।



## वैहायसी ( संहिता )

( १ )

[4]विषुवत्कं जपं कुर्यान्नादोर्ध्वध्वनिबोधितम् ।
मन्त्राक्षराणि मणिवच्छक्तौ प्रोतानि भावयेत् ॥ १७९५
तामेव च परे व्योम्नि परमामृतबृंहिताम् ।
दर्शयत्यात्मसद्भावमेवं मन्त्रो हुतिं विना ॥



## शचीमतम्

( १ )

[5]स्वातन्त्र्यशक्तिर्मेऽसि त्वमतिदुर्घटकारिणी ।
मायेति कीर्त्यसे देवि भर्तुर्मे वैश्वरूप्यदा ॥

---

१. त० आ० वि० ४ । २४४; पृ० २७०

२. त० आ० वि० ४ । २४४; पृ० २७०

३. त० आ० ६ । ७४-७५; पृ० ६५

४. स्प० प्र०, पृ० ३३

५. म० म० प०, पृ० ४६

( २ )

[1]योगस्त्वमसि देवेशि योगी चाहं सनातनः । १८००
योगेनेदं त्वया विश्वमाविष्टं शम्भुना मया ॥

## शम्भ्वैक्यदीपिका

( १ )

[2]विश्वमिदं मन्मयं मत्कार्यत्वात् । यदित्थं तत् तथा, यथा शरीरम् । इदं च मम कार्यम्, तस्मान्मन्मयमिति ।

( २ )

[3]अन्तर्गता हि प्रकाशव्याप्तिरिदमिति विश्राम्यति, बहिर्गता चाहमिति । एतद् द्वयं सर्वजनप्रसिद्धमनपह्नवनीयम् । १८०५

## शाम्भवदीपिका

( १ )

[4]चिन्मयस्वात्मपरमेश्वराराधनेन तदीयस्पन्दविलासात्म षट्त्रिंशत्तत्त्वमयं जगत् पोषयेदित्यर्थः ।

---

१. म० म० प०, पृ० १२२
२. म० म० प०, पृ० १८
२. म० म० प०, पृ० १६७
४. म० म० प०, पृ० १२०

( २ )

[1]सृष्टिस्थित्युपसंहारनिरोधानुग्रहात्मकम् । १८१०
कृत्यं पञ्चविधं यस्मात्तं नुमः शाश्वतं शिवम् ॥

## शिवज्ञानबोधसंग्रहः

( १ )

[2]अथ चर्याक्रियापादं योगपादं तथैव च ।
ज्ञानपादं क्रमाच्चैव शिवेन परिभाषितम् ॥
एतच्चतुर्विधं मार्गं सालोक्यादिफलप्रदम् ।

## शिवतत्त्वविलासः

( १ )

[3]भवद्भवपदं त्वेकं शान्त्यतीतमतः परम् । १८१५
शान्तितत्त्वं च नादाख्यमैशं विद्याख्यमेव च ॥
उदाहृतानि मुक्तानां पदान्येवं क्रमेण षट् ।

## शिवधर्मः

( १ )

[4]अधर्मभेदा विज्ञेयाश्चित्तवृत्तिप्रभेदतः ।
स्थूलाः सूक्ष्माः सुसूक्ष्माश्च कोटिभेदैरनेकधा ॥

---

१. सौ० ल० सौ०, श्लो० २८
२. श० र० सं०, पृ० ६
३. श० र० सं०, पृ० ८६
४. श० र० सं०, पृ० ५७

# शिवधर्मोत्तरम्

( १ )

[1]व्याधीनां भेषजं यद्वत् प्रतिपक्षः स्वभावतः । १८२०
तद्वत् संसारदोषाणां प्रतिपक्षः शिवः स्मृतः ॥
औषधस्य च सामर्थ्याद् यथा दोषं विसर्जयेत् ।
तथात्मज्ञानभैषज्याद् दोषं च विनिवर्तते ॥
तस्मात् स पण्डितः शान्तस्तपस्वी विजितेन्द्रियः ।
शिवज्ञानस्य सम्बन्धाद् भावमालोक्य मुच्यते ॥ १८२५

# शैवतन्त्रम्

( १ )

[2]शिष्यात्मप्राणमनसां संयोगं प्राणकं विदुः ।

( २ )

[3]आत्मना नादमध्ये तु लयं संचार्य तत्त्वतः ।
अकारोकारवर्णादिसंयोगेन वियोगतः ॥
हृदयादिबिलान्तं च विषुवं मन्त्रसंज्ञकम् ।

( ३ )

[4]मूलमन्त्रत्रिशूलेन भित्वा ग्रन्थीननुक्रमात् । १८३०
नादनाडीसमायोगाद् नाडीविषुवभावनम् ॥

---

१. श० र० सं०, पृ० १३
२. यो० दी०, पृ० ३२६
३. यो० दी०, पृ० ३२७
४. यो० दी०, पृ० ३२७

( ४ )

[1]अकारोकारवर्णौ च मकारो बिन्दुरेव च ।
नादनादान्तसंज्ञे तु त्यक्त्वा ब्रह्मादिभिः क्रमात् ॥
सप्तमे शक्तिमध्ये तु शिष्यात्मानं विचिन्तयेत् ।
प्रशान्तं तद्विजानीयात् प्रशान्तेन्द्रियगोचरम् ॥ १८३५

( ५ )

[2]शक्तिमध्यगतो नादः समनान्तं प्रसर्पति ।
तच्छक्तिविषुवं प्रोक्तमुन्मन्यां कालसंज्ञितम् ॥

## श्रीकण्ठीयसंहिता

( १ )

[3]आदिमान्तविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ।
गुरोर्लक्षणमेतावदादिमान्तं निवेदयेत् ॥

( २ )

[4]पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन । १८४०
ज्ञानमूलमिदं सर्वमन्यथा नैव सिद्ध्यति ॥

## श्रीपराक्रमः

( १ )

[5]हृत्सरोजान्तरे ध्यायन् पृथिव्यादि शिवान्तकम् ।
गुप्तादितप्तकुसुमक्षेपेणाऽऽसनतां नयेत् ॥

---

१. यो० दी०, पृ० ३३०
२. यो० दी०, पृ० ३३०
३. म० म० प०, पृ० ७१
४. शि० वि०, पृ० ४८
५. यो० दी०, पृ० २४५

( २ )

[1]ततो गोमयसंल्लिप्ते चतुरस्रे भुवः स्थले ।
प्रवहच्छ्वासहस्तेन कृतया मत्स्यमुद्रया ॥ १८४५
दिव्यगन्धं तुल्ययुक्तं विलिखेदर्घ्यमण्डलम् ।
वेदास्रवृत्तषट्कोणं त्रिकोणान्यन्तरेऽन्तरे ॥

( ३ )

[2]निवेद्य मस्तकस्थाय गुरवेऽर्घ्यं तदाज्ञया ।
कल्पान्तहुतभुक्कल्पचिदग्नौ विश्वघस्मरे ॥
मेयराशिमयं हव्यं वासनात्मोपदंशकम् । १८५०
व्यतिषङ्गेन स जुह्वन् जपेदात्मानमामृशन् ॥

## षट्सहस्रिका

( १ )

[3]दीक्षैव मोक्षदा पुंसां चिदभिव्यक्तिकारिणी ।

( २ )

[4]समयी पुत्रकश्चैव साधकाचार्यकौ तथा ।
सर्वेषां योजना कार्या शक्तितत्त्वे तु पुत्रकः ॥
मायातत्त्वे तु समयी विद्यातत्त्वे तु पुत्रकः । १८५५
ईश्वरे साधको भोगे आचार्यः सकले स्थितः ॥
एवं ज्ञात्वा प्रयत्नेन लयभोगौ प्रकल्पयेत् ।
अज्ञात्वा लयभोगौ तु यो दीक्षां कुरुते गुरुः ॥

---

१. यो० दी०, पृ० २५४
२. यो० दी०, पृ० २६३
३. ज्ञ० र० सं०, पृ० ७०
४. ज्ञ० र० सं०, पृ० ७८

आचार्यः सह शिष्यैस्तु नरके रौरवे पचेत् ।
देशिकस्तु प्रयत्नात् तु ज्ञात्वा दीक्षां समाचरेत् ॥ १८६०

———

## षड्धातुसमीक्षा

( १ )

[1]कर्माणि मोहमूलानि संसृतेः कारणं यतः ।
तत्क्षयात् कर्मनिर्मुक्तः स्वस्थः शान्ततमस्ततः ॥

—:०:—

## षाड्गुण्यविवेकः

( १ )

[2]साक्षात् त्वमेव वा शास्त्रं त्वदीयैव हि सा मतिः ।
शब्दद्वारेण संक्रम्य संस्करोत्यधिकारिणः ॥

( २ )

[3]स्वदेहसाक्षिकं चैतत् सर्वस्य ज्ञानचेष्टितम् । १८६५
ज्ञानानधिष्ठितः कायो लुठत्येव यतो धृतः ॥
अत एव जडानामप्यधिष्ठातृकृता धृतिः ।
गम्यते गगने ग्रावा न धार्येताऽन्यथा कथम् ॥

( ३ )

[4]अविद्याकृतसंकोचगृहीताहंयुतास्य या ।
तयाऽभिन्नोऽपि भिन्नोऽयं तत्त्वतः स्वप्नभीतवत् ॥ १८७०

---

१. स्प० प्र०, पृ० २१
२. स्प० प्र०, पृ० २
३. स्प० प्र०, पृ० १९
४. स्प० प्र०, पृ० २१

अभीत एव यः स्वप्ने बिभ्यदभ्येति सम्भ्रमम् ।
तस्य स्वप्नादभिन्नस्य को भेदः पारमार्थिकः ॥
तथा हि मिथ्यैव भयं ममेति यदि बुद्ध्यते ।
स्वप्नतत्त्वं परामृश्य भीतिभिन्नैर्न बाध्यते ॥
एवं त्वन्मय एवाऽहमिति भावनया त्वयि । १८७५
प्रलीनाऽहङ्कृतिग्रन्थिः पश्यत्येव त्वदात्मताम् ॥

( ४ )

[1]नहि बोधो विचित्रार्थनिर्माणेऽन्यमपेक्षते ।
संकल्पादेव यो रूपसहस्राणि सृजत्यजः ॥

( ५ )

[2]गुणेषु ज्ञानमाद्यन्ते तेन तत्त्वेऽवधारिते ।
धर्मत्वेनेशिता शक्तिर्बलवीर्यौजसां स्थितेः ॥ १८८०

## संवित्प्रकाशः

( १ )

[3]अपरोक्षे भवत्तत्त्वे सर्वतः प्रकटे स्थिते ।
यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते ॥

( २ )

[4]यदिदं दृश्यते किञ्चिद् दर्शनात् तन्न भिद्यते ।
दर्शनं द्रष्टृतो नान्यद् द्रष्टैव हि ततो जगत् ॥

---

१. स्प० प्र०, पृ० २२

२. स्प० प्र०, पृ० २६

३. वि० भै० वि०, पृ० १२४

४. म० म० प०, पृ० २१

( ३ )

[1]त्यागः शक्यक्रियो यस्य स हेय इति निश्चितः । १८८५
त्यक्तुं न शक्यते यच्च तदुपादेयमित्यपि ॥

( ४ )

[2]तस्माद् विकल्पः संशुद्धाद् विज्ञानान्नातिरिच्यते ।
तेनैव निर्विकल्पोऽयं विकल्पः स्वात्मनि स्थितः ॥

( ५ )

[3]इति निर्मलबोधैकरूपे देहपरिग्रहः ।
विवर्तपरिणामाभ्यां द्वाभ्यामप्युपपद्यते ॥ १८९०
विवर्तेऽप्यतथारूपस्तथा भासि त्वमच्युतं ।
परिणामे स एव त्वं सुवर्णमिव कुण्डले ॥

( ६ )

[4]संविन्मूलाद्वर्णरूपाज्ज्ञानस्तम्भात् सरस्वती ।
प्रागघोषा सनादाऽनु पुण्यतीर्था प्रवर्तते ॥
तत्प्रवृत्त्या प्राणयति शक्तिः सा विश्वमोजसा । १८९५
प्रतियान्ती पुनस्त्वासां संकोचयति संभवम् ॥
कार्यानुरूपं सा रूपं तथा नामापि बिभ्रती ।
निर्वाहयति विश्वस्मिंश्चित्रां यात्रां चराचरम् ॥

---

१. म० म० प०, पृ० २३

२. म० म० प०, पृ० २६

३. स्प० प्र०, पृ० ४

४. स्प० प्र०, पृ० ६

( ७ )

[1]वागेवास्याः कारणं विश्ववृत्ते-
न्यार्य्यं चैतन्नागमः केवलोऽयम् । १९००
नासङ्कल्पं किञ्चिदस्तीह कार्यं
वाचं विना न विकल्पोऽस्ति कश्चित् ॥

( ८ )

[2]अत्यन्ताच्छस्वभावत्वात् स्फटिकस्य यथा स्वकम् ।
रूपं परोपरक्तस्य नित्यमेवोपलभ्यते ॥
तथा भावसमासक्तं भगवंस्तावकं वपुः । १९०५
अत्यन्तनिर्मलतया पृथक् तैर्नोपलभ्यते ॥
नैतावताऽसौ स्फटिकः पृथग् नास्त्येव रञ्जकात् ।
भावरूपपरित्यक्ता तव वा निर्मला तनुः ॥

( ९ )

[3]माया त्वमेतदेव स्यान्नाशस्तत्त्वप्रदर्शनात् ।
नहि विज्ञातरज्ज्वात्मा सर्पादीन् मन्यते पुनः ॥ १९१०

( १० )

[4]कर्मेदं त्वत्कृतमपि त्वन्मयं येन माधव ।
विहीनाऽहङ्कृति ततस्त्वमेव परिशिष्यसे ॥
एतावतैव भेदोऽस्य यदहम्मानिताऽऽत्मनि ।
सा चेद्विलीना त्वद्भक्त्या नष्टो भेदः स्थितैकता ॥

१. स्प० प्र०, पृ० ९
२. स्प० प्र०, पृ० १६
३. स्प० प्र०, पृ० २०
४. स्प० प्र०, पृ० २२

## संवित्स्तोत्रम्

( १ )

[1]आदिमान्तिमगृहीतवर्णरा-
श्यात्मिकाहमिति या स्वतः प्रथा । १९१५
मन्त्रवीर्यमिति साधितागमै-
स्तन्मयो गुरुरसि त्वमम्बिके ॥

( २ )

[2]त्वामुपासितगुरूत्तमाः परां
वाचमाहुरविभक्तविश्वकाम् । १९२०
स्वप्रकाशनविमर्शनात्मिकां
वक्ति वागिति निरुक्तिमास्थिताः ॥

## संविदुल्लासः

( १ )

[3]अन्योन्यमप्रतीकारा बाध्यबाधकभावतः ।
वदन्ति तव वैश्वात्म्यं वादिविप्रतिपत्तये ॥

( २ )

[4]प्रामाणिकी विधिनिषेधकथा यदि स्यात् १९२५
पर्यन्ततः परम एव शिवः प्रमाणम् ।
सर्वोत्तरः स खलु तत्र विधिं निषिद्धे
कर्तुं क्षमेत विहिते च विभुर्निषेधम् ॥

---

१. म० म० प०, पृ० ७१
२. म० म० प०, पृ० १२९
३. म० म० प०, पृ० १२
४. म० म० प०, पृ० २३

( ३ )

[1]अर्चिःप्ररोहे महतः प्रमातु-
नीतिस्फुटत्वे च बहिःप्रथा मे। १९३०
अपेक्षते प्रेक्षितुमात्मदर्शं
सूर्योदयं तद्व्यवधिं च लोकः॥

( ४ )

[2]औष्ण्यं हुताश इव शीतलिमानमिन्दौ
शय्यासु मार्दवमिवाश्मसु कर्कशत्वम्।
बाह्येषु मोहमिव योगिषु च प्रबोधं १९३५
स्वातन्त्र्यमस्ति हि नियन्त्रयितुं महन्मे॥

( ५ )

[3]वेद्योपरागविभवेन विमोह्यमानं
लोहान्तरव्यतिकरादिव लब्धकार्ष्ण्यम्।
ज्वालावलीभिरमितस्य विमर्शवह्निः
स्वच्छं हिरण्यमिव मे हृदयं विधत्ते॥ १९४०

( ६ )

[4]द्वैतादन्यदसत्यकल्पमपरैरद्वैतमाख्यायते
तद्द्वैते बत पर्यवस्यति कृतं वाचाटदुर्विधया।
एते ते वयमेवमभ्युदयिनः कस्यापि कस्याश्चिद-
प्यालस्योज्झितमैकरस्यमुभयोरद्वैतमाचक्ष्महे॥

---

१. म० म० प०, पृ० २९
२. म० म० प०, पृ० ३२
३. म० म० प०, पृ० ३३
४. म० म० प०, पृ० ७८

( ७ )

[1]उद्योगमयमालस्यं प्रकाशैकात्मकं तमः । १९४५
अशून्यं शून्यकल्पं च तत्त्वं किमपि शाम्भवम् ॥

( ८ )

[2]स्वविभवविमर्शसुरभीण्याददते देवताः प्रसूनानि ।
ननु काननेषु सुलभं यदि तत् सामान्यसौरभात् तृप्तिः ॥

( ९ )

[3]पुण्ड्रेक्षोरिव मन्त्रस्य माधुर्ये हृदयस्पृशि ।
ऋजीषमानने तिष्ठत्यक्षरोच्चारलक्षणम् ॥ १९५०

( १० )

[4]विश्वं मूर्तिर्वैखरीनाम माला
यस्यैश्वर्यं देशकालातिलङ्घि ।
तद्भक्तानां स्वैरचारः सपर्या
स्वेच्छा शास्त्रं स्वस्वभावश्च मोक्षः ॥

( ११ )

[5]धन्याः केचिद्धनमिव विभोरागमैर्गोप्यमानां १९५५
व्याकुर्वाणां जगदपरथा वीरविक्रान्तिविद्याम् ।
माधुर्यस्य प्रथमपदवीं मङ्गलानां प्रतिष्ठां
मान्त्रीं शक्तिं मनसि महती देवतेत्याद्रियन्ते ॥

---

१. म० म० प०, पृ० १०४
२. म० म० प०, पृ० १११
३. म० म० प०, पृ० १२७
४. म० म० प०, पृ० १३७
५. म० म० प०, पृ० १५१

( १२ )

[1]पुष्पोपहारघनचन्दनवंशताल-
नृत्तप्रयोगमधुमुग्धवधूप्रधानाः । १९६०
भावाः सहस्रमपि जाग्रतु तत्तदन्तः
प्रह्लादिनी विजयते परचित्कलैका ॥

( १३ )

[2]आदर्शयोरिवान्योन्यं लम्भितप्रतिबिम्बयोः ।
शिवशक्त्योरनन्ताः स्युरन्तरन्तः प्रसक्तयः ॥

## संकर्षणसूत्राणि

( १ )

[3]स्वात्मैकनिष्ठं चिद्रूपं भावाभावपरिष्कृतम् । १९६५
स्वसंवेदनसंवेद्यं प्रकृत्यातीतगोचरम् ॥
इयं योनिः स्मृता विप्र मन्त्राणां प्रत्ययात्मिका ।
ते मन्त्रा वर्णरूपेण सबाह्याभ्यन्तरोदिताः ॥
नैष्कालिकपदावस्थाः करणानीव देहिनाम् ।
प्रयुक्ताः सर्वकालेषु सिद्ध्यन्ते वीर्ययोगतः ॥ १९७०

( २ )

[4]येनेदं दृश्यते विश्वं द्रष्टा सर्वस्य यः सदा ।
दृश्यश्चराचरत्वे यः स विष्णुरिति गीयते ॥

---

१. म० म० प०, पृ० १५२
२. म० म० प०, पृ० १५८
३. स्प० प्र०, पृ० ३३
४. स्प० प्र०, पृ० ३९

# संकेतपद्धतिः

( १ )

[1]पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः ।

( २ )

[2]एतत्कामकलाव्याप्तं गुह्याद् गुह्यतरं महत् ।
नाशिष्याय प्रवक्तव्यं नाभक्ताय कदाचन ॥ १९७५
एतत्प्रकाशनं मातुरुद्घाटनमुरोजयोः ।
आकृष्याच्छादनमिव तस्मान्नैतत् प्रकाशयेत् ॥
लोभान्मोहाच्च गर्वाच्च वैदुष्याद्वा प्रकाशयेत् ।
सोऽचिरान्मृत्युमाप्नोति शस्त्राघातविषादिभिः ॥

( ३ )

[3]वशिन्योऽष्टौ सान्तरालं………………… । १९८०
…………………अनाख्या सर्वगा ततः ॥

( ४ )

[4]मननात् त्राणधर्माऽसौ मन्त्रोऽयं परिकीर्तितः ॥

( ५ )

[5]अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥
अनयोः सामरस्यं यत् परस्मिन् महसि स्फुटम् । १९८५
वामाद्यैः पञ्चभिर्योऽसावीश्वरः परिकीर्तितः ॥

---

१. सौ० ल० सौभा०, श्लो० ११
२. सौ० ल० सौभा०, श्लो० १९
३. यो० दी०, पृ० ६१
४. यो० दी०, पृ० ६७
५. यो० दी०, पृ० १२४ : पङ्क्तित्रयमत्रत्यं प्रारम्भिकं ९, १२, २२ पृष्ठेष्वपि दृश्यते ।

आदावस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैव नखाग्रजा ॥
एता हार्धकलारूपा रूपपञ्चतया स्थिताः ।
अवर्णः सर्ववर्णानां न पृथग् भासते बहिः ॥ १९९०
इच्छा शिरःप्रदेशस्था ज्ञानं च तदधोगतम् ।
क्रिया पादगता ह्यस्य शान्ता हृन्मध्यगा भवेत् ॥
अष्टधाऽनाहतः प्रोक्तः शून्यादिप्रविभागतः ।
शून्यः स्पर्शस्तथा नादो ध्वनिर्बिन्दुस्तथैव च ॥
शक्तिबीजाक्षरं चेति ह्यष्टधाऽनाहतः स्मृतः । १९९५
चत्वारिंशत्सप्तसंख्याऽनाहतः परिकीर्तितः ॥
क्षकारः कथितो योऽसौ संयोगाद् द्विविधः स्मृतः ।
सप्तषष्ट्याख्यमेवं हि मातृकापीठमुत्तमम् ॥
अनाहतत्रिभिर्भेदैर्हतोत्तीर्णैः समन्ततः ।
स्थितो योऽसौ महापीठो मातृकाख्यो जयत्यसौ ॥ २०००

( ६ )

[1]न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथिताऽनिशम् ।
स्वे महिम्न्यद्वये धाम्नि सा पूजा या परा स्थिता ॥

( ७ )

[2]द्वैताद्वैतमहामोहशर्वरीक्षपणक्षमः ।
भास्वानिव जयत्येको गणेशो दूतरीयुतः ॥
प्रतिभायाः परोल्लासो निशाकर इवाऽपरः । २००५
दूतीयुक्तः स जयति बटुकस्ताण्डवान्वितः ॥

१. यो० दी०, पृ० १५५
२. यो० दी०, पृ० २२६

## सत्कार्यसिद्धिः

(१)

[1]नहि स्वनिष्ठे विज्ञाने इतरेतरवेदनम् ।
तस्मात् पूर्वापरावस्था( प्रमाण )परिपिण्डितः ॥
एकः प्रमाता चित्राभिर्वृत्तिभिर्व्यवहारभाक् ।

## समाधिपञ्चदशी

(१)

[2]यदेतस्यापरिज्ञानं तत् स्वातन्त्र्योपकल्पितम् । २०१०
स एव खलु संसारो जडानां यस्तु भीषणः ॥

## सम्बन्धसिद्धिः

(२)

[3]तेनानेकस्य रूपस्य श्लेष ऐकात्म्यमेव सः ।

---

१. स्प० प्र०, पृ० १५
२. म० म० प०, पृ० २८
३. म० म० प०, पृ० १३८

## सर्वज्ञभैरवः

( १ )

[1]नान्यत्र गमनं स्थानं मोक्षोऽस्ति सुरसुन्दरि ।
अज्ञानग्रन्थिभेदो यः स मोक्ष इति कथ्यते ॥

## सर्वज्ञानोत्तरम्

( १ )

[2]न पुंभिरार्षवाक्यं च वैदिकं चर्षिभिस्तथा । २०१५
न देवैर्ब्रह्मणो वाक्यं वैष्णवं पद्मजन्मजैः ॥
न शैवं विष्णुवचनैर्बाध्यते तु कदाचन ।

( २ )

[3]यो हि बाधयते पापः स मूढो नष्टचेतनः ।
उत्तरोत्तरवैशिष्ट्यं सर्वेषां परिकीर्तितम् ॥

( ३ )

[4]ये तु वर्णाश्रमाचाराः प्रायश्चित्ताश्च लौकिकाः । २०२०
संबन्धान् देशधर्मांश्च प्रसिद्धान्न विचारयेत् ॥
गर्भाधानादितः कृत्वा यावदुद्वाहमेव च ।
तावत्तु वैदिकं कर्म पश्चाच्छैवे ह्यनन्यभाक् ॥
न मुख्यवृत्त्या वै स्कन्द लोकधर्मान् समाचरेत् ॥

---

१. स्प० प्र०, पृ० ७
२. त० आ० वि० ४ । २४९; पृ० २७६
३. त० आ० वि० ४ । २५०; पृ० २७७
४. त० आ० वि० ४ । २५१; पृ० २७७–२७८

( ४ )

[१]उच्चार्यमाणा ये मन्त्रा न मन्त्रांश्चापि तान् विदुः । २०२५
मोहिता देवगन्धर्वा मिथ्याज्ञानेन गर्विताः ॥

( ५ )

[२]निष्कला परमा शक्तिरचिन्त्या सर्वतोमुखी ।
संसूक्ष्मा निर्मला नित्यानन्दा निर्वाणदायिनी ॥
या विजृम्भति तत्त्वेषु················चैव हि ।
तया धृतं जगत् सर्वमेकयाऽनेकरूपया ॥ २०३०
अस्या ऊर्ध्वं निरालम्बं निराधारं निरामयम् ।
अचिन्त्यं व्यापकं शान्तं सृष्टिसंहारवर्जितम् ॥

( ६ )

शक्त्यभिधानं बिन्दुतत्त्वमेव परमकारणमित्युक्तम्—
[३]अतोर्ध्वं बैन्दवं तत्त्वं विमलं सर्वतोमुखम् ।
परमं सर्वतत्त्वानामनन्तज्योतिरूपकम् ॥

( ७ )

[४]तत्त्वैरेभिर्निबद्धात्मा सर्वधर्मैश्च संयुतः । २०३५
नाऽनेन शक्यते भोक्तुं वर्ज्यं दीक्षां शिवात्मिकाम् ॥

( ८ )

[५]कलानां निलयो यस्मात् तेनाऽसौ केवलः स्मृतः ॥

---

१. शि० वि०, पृ० ४८
२. श० र० सं०, पृ० ४१
३. श० र० सं०, पृ० ४५
४. श० र० सं०, पृ० ६९
५. श० र० सं०, पृ० ७८

( ९ )

[1]यस्तु जाग्रदवस्थायां नियम्य सकलेन्द्रियान् ।
तुर्यावस्थागुणोपेतस्तां विना भावयेत् पुनः ॥
स जीवन्मुक्त इत्युक्तो देहान्ते मुक्त उच्यते । २०४०

तथा—

न हृष्यत्युपकारेण नापकारेण तप्यति ॥
यः समः सर्वभूतेषु जीवन्मुक्तः स कथ्यते ।

( १० )

[2]शिवज्ञानामृतं पीत्वा विचरस्व यथासुखम् ।

( ११ )

[3]शिववच्छाश्वतः शुद्धः सृष्टिधर्मविवर्जितः ।
सत्यं सत्यं पुनः सत्यं त्रिसत्यं समयः कृतः ॥ २०४५
अतः परतरं नास्ति विज्ञेयं कुत्रचिद् गुह ।

## सर्वमङ्गलाशास्त्रम्

[4]शक्तयोऽस्य जगत्कृत्स्नम्....... .......... ।

---

१. श० र० सं०, पृ० ८२
२. श० र० सं०, पृ० ८७
३. श० र० सं०, पृ० ८९
४. शि० वि०, पृ० ८९, ११७

(२)

[1]शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ॥

---

## सर्ववीरः

(१)

[2]अज्ञानात् शङ्कते लोकस्ततः सृष्टिश्च संहृतिः । २०५०
मन्त्रा वर्णात्मकाः सर्वे सर्वे वर्णाः शिवात्मकाः ॥

(२)

[3]तस्य स्वेच्छाप्रवृत्तत्वात् कारणानन्ततेष्यते ।
कदाचिद् भक्तियोगेन कर्मणा विद्ययाऽपि वा ॥
ज्ञानधर्मोपदेशेन मन्त्रैर्वा दीक्षयापि वा ।
एवमाद्यैरनेकैश्च प्रकारैः परमेश्वरः ॥ २०५५
संसारिणोऽनुगृह्णाति विश्वस्य जगतः पतिः ।

(३)

[4]अनादिमति संसारे कारणं परमेश्वरः ।
स्वभावेनैव जन्तूनामनुग्रहपरः सदा ॥
तया बद्धान् शिवो जन्तून् स्वेच्छया मोचयत्यतः ।

---

१. शि० वि०, पृ० ८९, ११७; त० आ० वि० ५ । ४०; पृ० ३४७, ३७४
२. प्र० हृ०, सू० १२, २७; म० म० प०, पृ० २८
३. त० आ० ४ । ५५–५७; पृ० ६१–६२
४. त० आ० वि० ४ । ५५–५७; पृ० ६२

( ४ )

[1]इच्छैव कारणं तस्य.............................. । २०६०

## सर्वस्रोतःसंग्रहसारः

( १ )

[2]येन येन हि रूपेण साधकः संस्मरेत् सदा ।
तस्य तन्मयतां याति चिन्तामणिरिवेश्वरः ॥

## सर्वाचारः

( १ )

[3]अज्ञानाद् बध्यते लोकस्ततः सृष्टिश्च संहृतिः ।

## सात्वतसंहिता

( १ )

[4]ज्ञानं शिवं परं बोधमपरं तन्त्रसंज्ञितम् ।

---

१. त० आ० वि० ४ । ५५-५७; पृ० ६२
२. श० र० सं०, पृ० २०
३. शि० वि०, पृ० ११
४. श० र० सं०, पृ० ७

# सारशास्त्रम्

( १ )

[1]धर्माधर्मात्मकं भावैरनेकैर्वेष्टयेत् स्वयम् । २०६५
असन्देहं स्वमात्मानमवीच्यादिशिवान्तके ॥
तद्वच्छक्तिसमूहेन स एव तु विवेष्टयेत् ।
स्वयं बध्नाति देवेशः स्वयं चैव विमुञ्चति ॥
स्वयं भोक्ता स्वयं ज्ञाता स्वयं चैवोपलक्षयेत् ।
स्वयं युक्तिश्च मुक्तिश्च स्वयं देवी स्वयं प्रभुः ॥ २०७०
स्वयमेकाक्षरा चैव यथोष्मा कृष्णवर्त्मनः ।

# सार्धशतिकम्

( १ )

[2]द्वादशारं महाचक्रं रश्मिरूपं प्रकीर्तितम् ।
नाम चैव प्रवक्ष्यामि रश्मीनां तु यदास्थितम् ॥
सृष्टिः स्थितिश्च संहारो रक्तकाली तथैव च ।
स्वकाली यमकाली च मृत्युकाली तथैव च ॥ २०७५
रुद्रश्च परमार्कश्च मार्तण्डश्च ततः परः ।
कालाग्निरुद्रकाली च महाकाल्यभिधा पुनः ॥
महाभैरवशब्दश्च घोरशब्दस्ततः परः ।
चण्डकालीपदं चान्ते त्रयोदश उदाहृताः ॥

---

१. त० आ०———
२. त० आ० वि० ४ । १४९; पृ० १६१

# सिद्धातन्त्रम्

( १ )

[1]अनायासमनारम्भमनुपायं महाफलम् । २०८०
श्रोतुमिच्छामि योगेश योगं योगविदांवर ॥

( इति देव्याः पृष्टे )—

शृणु देवि प्रवक्ष्यामि योगामृतमनुत्तमम् ।
यत्प्राप्य शिवतां मर्त्या लभन्त्यायासवर्जिताः ॥
न चैतदप्रसन्नेन शङ्करेणोपदिश्यते ।
कथञ्चिदुपलब्धेऽपि वासना न प्रजायते ॥ २०८५

( इत्याद्युपक्रम्य )—

तस्मात्तदभ्यसेन्नित्यमविरक्तेन चेतसा ।
स विसर्गो महादेवि यत्र विश्रान्तिमर्हति ॥
गुरुवक्त्रं तदेवोक्तं शक्तिचक्रं तदुच्यते ।
तदेव सर्वमन्त्राणामुत्पत्तिस्थानमुत्तमम् ॥

# सिद्धान्तदीपिका

( १ )

[2]शिवेच्छाप्रेरितानन्दनाथविक्षोभिता पुनः । २०९०
घृतकीटनयादेकदेशेन परिणामता ॥

---

१. त० आ० वि० १ । १२३-१२४; पृ० २५७

२. श० र० सं०, पृ० ४९

शक्त्यात्मककलादीनि प्रयान्ति स्थूलरूपताम् ।
नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः ॥

## सिद्धान्तरहस्यसारः

(१)

[1]विद्यादिपञ्चतत्त्वानां वागिन्द्रियसहायता ।
वैखर्यादिविभेदश्च भोगकाले नृणां भवेत् ॥ २०९५
नादः सूक्ष्मो भवेद् बिन्दुः पश्यन्ती मध्यमाक्षरम् ।
मातृका वैखरी ज्ञेया नादाद्यास्तु शिवादयः ॥
कण्ठोष्ठ्यमीश्वरीतत्त्वे विद्यायां वैखरी स्थिता ।
सूक्ष्मादयो बस्तिनाभिहृद्ग्रीवास्येषु संस्थिताः ॥
वैखर्यन्यश्रोत्रगता कण्ठोष्ठ्यं स्वश्रुतिं गता । २१००
सविकल्पा मध्यमा स्यात् पश्यन्ती निर्विकल्पयुक् ॥
आसां सूक्ष्मा कारणं स्याद् ब्रह्मघोषं तदुच्यते ।

## सिद्धान्तवचनम्

(१)

[2]विग्रहो विग्रही चैव सर्वविग्रहविग्रही ।

---

१. श० र० सं०, पृ० ५३
२. प्र० हृ०, सू० ४

## सिद्धान्तसारावलिः

( १ )

[1]शक्तिश्चित्तनुरीश्वरस्य करणं ज्ञेयेषु कार्येषु तद्
भेदैः सोपहिता प्रयाति गुणतो भेदं क्रियाज्ञानतः । २१०५
नित्यं तत् सकलान्यकर्तृनिहिता वर्त्मन्यशुद्धे सिते
कृत्यं सैव करोति पत्यनुगता वामादिशक्त्यात्मिका ॥

( २ )

[2]वाग्धीकायात्मसाध्यं फलजननकरं
कर्म धर्मादिभोग्यम् ।
स्वापे चायाति पाकं स्थितिमतिसंहितं २११०
भोगदं स्यात् कलान्तम् ॥

## सिद्धामतम्

( १ )

[3]कथितं गोपितं तेभ्यस्तस्माल्लेख्यं न पुस्तके ।
गुरुवक्त्रात्तु लभ्येत अन्यथा न कदाचन ॥

( २ )

[4]स्वमन्त्ररक्षणं यत्नात् सर्वदा कारयेत् सुधीः ।

---

१. श० र० सं०, पृ० २२

२. श० र० सं०, पृ० ५७

३. त० आ० वि० ४ । ६७–६८; पृ० ७३

४. त० आ० वि० ४ । ६७–६८; पृ० ७४

( ३ )

[1]अर्थषट्कं च दीक्षा च शिवशास्त्रमिति स्मृतम् । २११५
दीक्षाध्वा निर्भयो भोगशास्त्रे भैरवसंज्ञके ॥

( ४ )

[2]सात्र कुण्डलिनी बीजजीवभूता चिदात्मिका ।
तज्जं ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥
आइत्यवर्णादित्यादि यावद् वैसर्गिकी कला ।
ककारादिसकारान्ताद् विसर्गात् पञ्चधा स च ॥ २१२०
बहिश्चान्तश्च हृदये नादेऽथ परमे पदे ।
बिन्दुरात्मनि मूर्धान्ते हृदयाद्व्यापको हि सः ॥
आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ।
गुरोर्लक्षणमेतावदादिमान्त्यं च वेदयेत् ॥
पूज्यः सोऽहमिव ज्ञानी भैरवो देवतात्मकः । २१२५
श्लोकगाथादि यत्किञ्चिदादिमान्त्ययुतं यतः ॥
तस्माद्विदंस्तथा सर्वं मन्त्रत्वेनैव पश्यति ।

## सिद्धोक्तम्

( १ )

[3]अदृश्यं नेत्रवद् ब्रह्म द्रष्टृत्वं चाऽस्ति नेत्रवत् ।
स्वात्मन्येवोपलम्भोऽस्य दर्शनं घटवन्न तु ॥

---

१. म० म० प०, पृ० ७, १३८
२. शि० वि०, पृ० ६५–६७
३. स्प० प्र०, पृ० १९

( २ )

[1]यद्वत् प्रकाशभवने प्रकाश्यविषयो न दृश्यते मातः । २१३०
संपर्कात् तत्र तद्वत् संविद् वेद्ये न भाव्यते जातु ॥

( ३ )

[2]चिद्व्योम्निस्थोऽनुसन्धत्ते यत्तत्पश्यत्यखण्डितम् ।

---

## सुप्रभेदागमः

( १ )

[3]योगाभ्यासं ततः कृत्वा ज्ञानं तत्र तदाभ्यसेत् ।
तदाऽज्ञानान्धकारं च ज्ञानदीपेन नाशयेत् ॥

( २ )

[4]सालोक्यं चैव सामीप्यं सारूप्यं सायुज्यकं तथा । २१३५

( ३ )

[5]तदूर्ध्वं बिन्दुतत्त्वं तु तदूर्ध्वे नाद एव तु ।
तदूर्ध्वं शक्तितत्त्वं हि तत्त्वं तत्त्वे तदूर्ध्वतः ॥
अतोर्ध्वे शिवतत्त्वं स्यात् सर्वतत्त्वोपरि स्थितम् ।
शिवाद्यवनिपर्यन्तं व्यापकं तेन तेजसा ॥

---

१. स्प० प्र०, पृ० २८
२. स्प० प्र०, पृ० ४३
३. श० र० सं०, पृ० ६
४. श० र० सं०, पृ० ६
५, श० र० सं०, पृ० ४४

(४)

[1]अध्यात्ममधिभूतं च आधिदैविकमेव च । २१४०
त्रिविधं दुःखमाप्नोति तेषामाध्यात्मिकं शृणु ॥
आध्यात्मिकं द्विधा प्रोक्तं शारीरं मानसं तथा ।
गुल्मोऽर्शमतिसारं च ज्वरशूलाद्यनेकधा ॥
नर-मृग-पिशाचैश्च गो-यक्ष-चोर-राक्षसैः ।
प्रोक्तं शरीरजं दुःखं मानसं शृणु सुव्रत ॥ २१४५
शोकासूयावमानेर्ष्यामात्सर्यादिभिरेव च ।
एवं मानसमाख्यातमाधिभौतिकमुच्यते ॥
शीतोष्णवातवर्षैश्च विद्युदशनिमारुतैः ।
एतैर्भूतैस्तु यद् दुःखमाधिदैविकमुच्यते ॥
गर्भजन्मजराऽज्ञानमृत्युनरकजं तथा । २१५०
प्रोक्तं दुःखत्रयं ह्येवमेषु स्थानेषु भुज्यते ॥

(५)

[2]त्र्यवस्थः पुरुषः प्रोक्तः शुद्धः सकलः केवलः ।
शुद्धावस्थानमात्मानं शिवरूपमिति स्मृतम् ॥

(६)

[3]अमूर्तः स पशुर्नित्यो निर्गुणो निष्क्रियोऽप्रभुः ।
मायोदरगतो व्यापी भोगोपायेष्वशक्तितः ॥ २१५५
स केवलस्त्विवति प्रोक्तः स्वापवान् मलबन्धनात् ॥

(७)

[4]त्रिमलैर्बध्यते चात्मा सकलः परिवारितः ।
सकलश्चेति बद्धात्मा संसारी विषयी तथा ॥

---

१. श० र० सं०, पृ० ५६
२. श० र० सं०, पृ० ५८
३. श० र० सं०, पृ० ५९
४. श० र० सं०, पृ० ६५

क्षेत्री क्षेत्रज्ञो भोक्ता च पशुर्ज्ञानी तथैव च।
भोगी चैव शरीरी च आत्मपर्यायवाचकः॥ २१६०

(८)

[1]शिवे संयोजितं रूपं सायुज्यमिति कथ्यते।

(९)

[2]अग्निदग्धानि बीजानि न प्ररोहन्ति भूतले।

(१०)

[3]शरीरारब्धकर्माणि भुज्यन्ते स्वयमेव तु।

(११)

[4]हिङ्गुत्यक्ते तु तत्पात्रे गन्धस्तत्र न नश्यति।
कुलालचक्रं कर्मान्ते यथा भ्रमति वै तथा॥ २१६५

(१२)

[5]घटगुप्तो यथा दीपो घटनाशे तु दीप्यते।
घटागुप्तो यथा भानुर्मुक्तौ चापि तथा भवेत्॥
स्वभावज्ञानतो मुक्तिः स जीवन्मुक्त एव हि।
देहनाशे परा व्याप्तिर्घटनाशे तु दीपवत्॥

---

१. श० र० सं०, पृ० ८५
२. श० र० सं०, पृ० ९१
३. श० र० सं०, पृ० ९१
४. श० र० सं०, पृ० ९२
५. श० र० सं०, पृ० ९३

# सुभगोदयः

( १ )

[1]मूलादिब्रह्मरन्ध्रान्तं मूलविद्यां विभावयेत् । २१७०
उद्यदादित्यसंकाशां तटित्कोटिसमप्रभाम् ॥
तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेत् ।

( २ )

[2]पराहन्तामये संविदग्नौ संवेद्यतर्पणे ।
इदन्तालक्षणं हव्यं जुहुयादबहिर्मुखः ॥

( ३ )

[3]दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु । २१७५
षोडशी तु कला नित्या सच्चिदानन्दरूपिणी ॥

( ४ )

[4]इच्छादिशक्तित्रितयं पशोः सत्त्वादिसंज्ञकम् ।
महत्त्र्यश्रं चिन्तयामि गुरुवक्त्रादनुत्तरात् ॥
अष्टारव्यपदेशोऽयं चिन्निर्वाणैषणादिकम् ।
सूक्ष्मं पुर्यष्टकं देव्या मतिरेषा हि गौरवी ॥ २१८०
अन्तर्दशारवसुधा ज्ञानकर्मेन्द्रियाणि च ।
महात्रिपुरसुन्दर्या इति संचिन्तयाम्यहम् ॥
बाह्यो दशारभागोऽयं बुद्धिकर्माक्षगोचरः ।
चतुर्दशारवसुधाकरणानि चतुर्दश ॥

---

१. सौ० ल० सौभा०, श्लो० २१

२. म० म० प०, पृ० १३२

३. सौ० ल० अरु०, पृ० ४६; सौ० ल० लक्ष्मी०, पृ० १४९

४. यो० दी०, पृ० ४५

वसुच्छदनपद्माङ्कदेशो यश्चक्रगो विभुः । २१८५
अव्यक्ताद्याः प्रकृतयो भूतान्ता निश्चिनोम्यहम् ॥
षोडशच्छदपद्माङ्कदेशो भूताक्षमानसम् ।
विकारात्मकतापन्नं देव्याः सम्भावयाम्यहम् ॥

## सुभगोदयः

(१)

[1]परोऽपि शक्तिरहितः शक्तः कर्तुं न किञ्चन ।
शक्तः स्यात् परमेशानि शक्त्या युक्तो भवेद्यदि ॥ २१९०

(२)

[2]षोडशकलानां षोडशनित्यात्मकत्वात् । तासां प्रतिपदादि-शुक्लपक्षकृष्णपक्षतिथ्यात्मकतया वृद्धिक्षयसद्भावात् चन्द्रस्यापि सहस्रकमलगतस्य वृद्धिक्षयौ भवत एव ॥

(३)

[3]सूर्यमण्डलमध्यस्थां देवीं त्रिपुरसुन्दरीम् ।
पाशाङ्कुशधनुर्बाणहस्तां ध्यायेत् सुसाधकः ॥ २१९५
त्रैलोक्यं मोहयेदाशु वरनारीगणैर्युतम् ।

१. सौ० ल० लक्ष्मी०, पृ० ८०
२. सौ० ल० लक्ष्मी०, पृ० ९९
३. सौ० ल० लक्ष्मी०, पृ० १८७

## सुभगोदयव्याख्या

(१)

[1]शिखिज्वालारूपः समय इह सैवात्र समया
तयोः संभेदो मे दिशतु हृदयाब्जैकनिलयः ॥

## सोमराजः

(१)

[2]श्रीमद्वामनभानुः क्रमकमलविकासने चतुरः ।
जयति षडध्वप्रोज्झितपरनभसि निबद्धसंतानः ॥ २२००

(२)

[3]येन ध्वस्तः समस्तो गहनतरमहामोहघोरान्धकारो
दत्तः सम्यक्प्रकाशः क्रमकमलवनोल्लासविश्रान्तिरूपः ।
प्राप्ता येनैव संविन्निरुपमसरसास्वादसंयोगभोगा
वन्दे श्रीभोजराजं गुरुवरमहितं पूज्यमर्हद्भिरन्तः ॥

## सोमसिद्धान्तः

(१)

[4]पञ्चधा लौकिकं तन्त्रं तथा तन्त्रं च वैदिकम् । २२०५
तन्त्रमाध्यात्मिकं तद्वदतिमार्गं तथैव च ॥
तथैव मन्त्रतन्त्राख्यं तेषु यद् बहुधेरितम् ।

१. सौ० ल० लक्ष्मी०, पृ० १७५
२. त० आ० वि० ४।१७३; पृ० १९६
३. त० आ० वि० ४।१७३; पृ० १९७
४. श० र० सं०, पृ० ८-९

# सौभाग्यकाण्डम्

( १ )

[१]तिस्रः पुरस्त्रिपथा विश्वचर्षणा
अत्राकथा अक्षराः संनिविष्टाः ।
अधिष्ठायैना अजरा पुराणी २२१०
महत्तरा महिमा देवतानाम् ॥
नवयोनिं नव चक्राणि दीधिरे
नवैव योगा नव योगिन्यश्च ।
नवानां चक्रा अधिनाथाः स्योना
नव भद्रा नव मुद्रा महीनाम् ॥ २२१५
एका स आसीत् प्रथमा सा नवासी-
दा सोनविंशादा सोनत्रिंशत् ।
चत्वारिंशादथ तिस्रः समिधा
उशतीरिव मातरो माविशन्तु ॥

( २ )

[२]कामो योनिः कमला वज्रपाणि- २२२०
र्गुहा हसा विश्वमाताभ्रमिन्द्रः ।
पुनर्गुहा सकला मायैषा
पुरूच्येषा विश्वमातादिविद्या ॥

---

१. सौ० ल० सौभा०, श्लो० ११
२. सौ० ल० सौभा०, श्लो० ३३

( ३ )

[1]भगः शक्तिर्भगवान् काम ईश
उभौ दाताराविह सौभगानाम् । २२२५
समप्रधानौ समसत्त्वौ समोतयोः
शक्तिरजरा विश्वयोनिः ॥

## सौभाग्यसुभगोदयः

( १ )

[2]पुनरेव कामपीठे तदग्रकोणे स्थिते मनोरूपे ।
प्रतिफलितं तज्ज्योतिः स्वयम्भुलिङ्गं समीहितं सद्भिः ॥
दक्षिणकोणेऽहङ्कृतिरूपे जालन्धरे तु संक्रान्तम् । २२३०
परधाम बाणलिङ्गं जातं सङ्क्रान्त्युपाधिभेदवशात् ॥
मध्यत्रिकोणकोणे वामे श्रीपूर्णपीठमेतस्मिन् ।
बुद्धिमये परतेजःप्रतिफलितं त्वितरलिङ्गतां यातम् ॥
चित्तमये श्रीपीठे ज्योतिर्बिन्दौ यदस्य संक्रान्तम् ।
प्रतिफलितं परधाम्नः परलिङ्गं तत्प्रकीर्त्यते प्राज्ञैः ॥ २२३५

( २ )

[3]सैव महाविद्यात्मा माता चतुरन्वयैकविश्रान्तिः ।
चतुराननादिजननी जाता चतुरात्मवर्गफलदात्री ॥
अस्वरविमर्शरूपौ स्वांशौ हित्वा चतुष्कलौ सैव ।
वामादीच्छादिमयान्यकरोद् द्वन्द्वान्यमूनि चत्वारि ॥

---

१. सौ० ल० सौभा०, श्लो० ३४

२. यो० दी०, पृ० ३८

३. यो० दी०, पृ० १००–१०२

वामांशो ब्रह्मा स्यादिच्छैव तस्य भारती शक्तिः । २२४०
अनयोरेतन्मिथुनं सृष्टिः प्राग् वाग्भवात्मकं बीजम् ॥

ज्येष्ठांशो विष्णुः स्याज्ज्ञानं विश्वम्भरा तयोर्मिथुनम् ।
इदमेव दक्षिणान्वयरूपं श्रीकामराजमभ्यास्ते ॥

रौद्र्यात्मकस्तु रुद्रः क्रियामयी शक्तिरस्य रुद्राणी ।
युगलमिदं तार्तीयं बीजं पालयति पश्चिमाम्नायम् ॥ २२४५

स्यादम्बिकास्वरूपः शम्भुः शान्तात्मिकाऽस्य शक्तिः स्यात् ।
मिथुनमिदं शिवशक्त्योरुत्तरसमयात्मतुर्यमधितिष्ठेत् ॥

एवमनुत्तरशक्त्योश्चतुरंशद्वन्द्वरूपिणी जाता ।
चतुरन्वयात्मिकेयं पश्यन्ती मातृकामयी विद्या ॥

सृष्टिः पूर्वाम्नायो वाग्भवबीजं तदात्मकं त्रिविधम् । २२५०
सृष्टिस्थितिसंहारैर्भिन्ना सृष्टिस्त्रिमूर्तिमूर्तिः स्यात् ॥

ब्रह्माऽत्र सृष्टिसृष्टावधिपतिरेतस्य भारती शक्तिः ।
सोऽयं हस्यार्थः स्यात् स एव शिवशक्तिवाचकश्चापि ॥

हस्यार्थः स्यादत्र स्वशक्तिमयरूपसार्णसंयोगात् ।
सृष्टिस्थितौ तु विष्णुः कर्ता विश्वंभराऽस्य शक्तिः स्यात्॥ २२५५

विष्णुः कलिपेरर्थो ललिपेरेतस्य शक्तिरर्थः स्यात् ।
रुद्रोऽधिपतिः शक्ती रौद्री स्यात् तत्र सृष्टिसंहारे ॥

हरवर्णयुगलमनयोर्वाचकमर्थोऽत्र रस्य रुद्रः स्यात् ।
रुद्राक्षरसम्पर्काद् रौद्री तच्छक्तिरत्र हस्यार्थः ॥

अत्र तु शक्त्यर्णस्य प्राथम्यं शक्तिबीजभूतत्वात् । २२६०
अधिवसतः शिवशक्ती संज्ञानाख्या तयोस्तु त्रित्वमयी॥

कामकला कलयित्री तुर्यमयी रक्तशुक्लमिश्रतनुः ।
रक्तो बिन्दुः शक्तिः शुक्लः शम्भुः परस्तदैकात्म्यम् ॥

एवं द्वितीयबीजं स्थितिरूपं दक्षिणान्वयात्म स्यात् ।
स्थितिसृष्ट्यादिविभेदाद् वसन्ति ता एव देवतास्तत्र ॥ २२६५
अत्र कलवर्णमध्यस्थितो हकारः स्थितिस्वरूपत्वम् ।
अस्य द्योतयति परं स्थितिरूपं संविदम्बिकाकारः ॥
संहारात्मकपश्चिमसमये तद्वदेव तार्तीयम् ।
संहृतिसृष्ट्यादिवशाद् वसन्ति ता एव देवतास्तत्र ॥
सृष्टौ शक्तेर्नियतप्राधान्यादस्य शक्तिबीजत्वात् । २२७०
स्वात्मनि संहृतिसृष्टौ शिवमन्तर्भाव्य विभासते शक्तिः॥
त्रिमये तुरीयबीजेऽनाख्यारूपोत्तरान्वयात्मनि तौ ।
शक्तिशिवावधिवसतो निरन्तरं सामरस्यमापन्नौ ॥
सृष्ट्यादिभेदभिन्नश्रीविद्यावर्णयुगलनवकात्मा ।
नवनादवर्गरूपा माता सा मध्यमाऽभिधा वितता ॥ २२७५
शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
व्याप्यव्यापकभावात् पञ्चदश स्युः क्रमेण तत्संख्याः ॥
तिथयश्च कला नित्यास्तदात्मिकाः स्युस्तथैव तत्संख्यैः ।
वर्णैः समष्टिरेषा विद्या व्याप्नोति तानि सर्वाणि ॥
सर्गादिसमष्टिरूपः स्वांशैरेभिस्तदात्मना विततः । २२८०
सर्गेण कादिवर्णैरपि षट्त्रिंशद्भिरात्मनोऽवयवैः ॥
पुनरज्व्यञ्जनबिन्दुप्रभेदभिन्नांस्तदक्षरावयवान् ।
षट्त्रिंशत्संख्याकांस्तत्त्वमयानश्नुते हि सा माता ॥
व्यष्टिसमष्टिविभेदैश्चतुरात्मा तत्त्वबीजपीठमयी ।
चतुरन्वयात्मनाऽपि च मातादष्टकमातृकामयी विद्या ॥ २२८५

( ३ )

[1]यदयमनुत्तरमूर्तिर्निजेच्छया निखिलमपि जगत्स्रष्टुम् ।
प्रस्पन्दे स स्पन्दः प्रथमं शिवतत्त्वमुच्यते तज्ज्ञैः ॥

---

१. यो० ही०, पृ० १२४–१२६

इच्छा सैव स्वेच्छा सन्ततसमवायिनी सती शक्तिः ।
सचराचरस्य जगतो बीजं निखिलस्य निजविलीनस्य ॥

स्वेच्छाशक्त्युद्गीर्णं जगदात्माहन्तया समाच्छाद्य । २२९०
निवसन् स एव निखिलानुग्रहनिरतः सदाशिवोऽभिहितः ॥

विश्वं स एव पश्यन्निदंतया निखिलमीश्वरो जातः ।
सा भाति शुद्धविद्या येदन्ताहन्तयोरभेदमतिः ॥

माया विभेदबुद्धिर्निजांशभूतेषु निखिलभूतेषु ।
नित्यं तस्य निरङ्कुशविभवं वेलेव वारिधिं रुन्धे ॥ २२९५

स तया परिमितमूर्त्तिः संकुचितसमस्तशक्तिरेष पुमान् ।
रविरिव सन्ध्यारक्तः संहृतरश्मिः स्वभासनेऽप्यपटुः ॥
सम्पूर्णकर्तृताद्या या बह्वयः सन्ति शक्तयस्तस्य ।
संकोचात् संकुचिता कलादिरूपेण रूषयन्त्येनम् ॥
तत्सर्वकर्तृता सा संकुचिता कतिपयार्थमात्रपरा । २३००
किञ्चित्कर्तारममुं कलयन्ती कीर्त्यते कलानाम्ना ॥
सर्वज्ञताऽस्य शक्तिः परिमिततनुरल्पवेद्यमात्रपरा ।
ज्ञानमुपपादयन्ती विद्येति निगद्यते बुधैराद्यैः ॥
नित्यपरिपूर्णतृप्तिः शक्तिस्तस्यैव परिमिता तु सती ।
भोगेषु रञ्जयन्ती सततममुं रागतत्त्वतां याता ॥ २३०५
सा नित्यताऽस्य शक्तिर्निकृष्य निधनोदयप्रदानेन ।
नियतपरिच्छेदकरी क्लृप्ता स्यात् कालतत्त्वरूपेण ॥
याऽस्य स्वतन्त्रताख्या शक्तिः संकोचशालिनी सैव ।
कृत्याकृत्येष्ववशं नियतममुं नियमयन्त्यभून्नियतिः ॥
इच्छादित्रिसमष्टिशक्तिः शान्ताऽस्य संकुचद्रूपा । २३१०
संकुचितेच्छाद्यात्मकसत्त्वादिकसाम्यरूपिणी तु सती ॥
बुद्ध्यादिसामरस्यरूपा चित्तात्मिका मता प्रकृतिः ।
इच्छाऽस्य रजोरूपाऽहङ्कृतिरासीदसत्प्रतीतिकरी ॥

ज्ञानमपि सत्त्वरूपा निर्णयबोधस्य कारणं बुद्धिः ।
तस्य क्रिया तमोमयमूर्तिर्मन इत्युच्यते विकल्पकरी ॥ २३१५
वागादिपञ्चभेदैः स एव संकुचितविग्रहो देवः ।
ज्ञानक्रियोपरागप्राधान्याद् द्विविधविषयरूपोऽभूत् ॥
श्रोत्रं चक्षुः स्पर्शनजिह्वाघ्राणानि बोधकरणानि ।
वाक्पाणिपादपायूपस्थाख्याकानि कर्मकरणानि ॥
शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि । २३२०
अयमेवातिनिकृष्टो जातो भूतात्मनाऽपि भूतेशः ॥
गगनमनिलश्च तेजः सलिलं भूमिश्च पञ्चभूतानि ।
श्रोत्रादिकरणवेद्याः शब्दाद्यास्तानि वेदकान्येषाम् ॥
वचनकरी वागासीत् पाणिः स्यात् करणभूतमादाने ।
गमनविसर्गानन्दत्रितये पादादित्रिकं करणम् ॥ २३२५
गन्धवती भूमिः स्यादापः सांसिद्धिकद्रवास्तेजः ।
उष्णस्पर्शमरूपस्पर्शो वायुरम्बरं शब्दः ॥

( ४ )

[1]हित्वा चतुष्कला सैव.................. ।

—⊷○⊶—

## सौभाग्यहृदयस्तोत्रम्

( १ )

[2]नेत्रादिजालकोपान्ते हृत्पद्मासनलीलया ।
वारं वारं त्वया देवि रूपादिमधु सेव्यते ॥ २३३०

---

१. यो० दी०, पृ० १७१
२. म० म०, प० पृ० १३

( २ )

[1]वर्णः कला पदं तत्त्वं मन्त्रो भुवनमेव च ।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥

—:०:—

## स्तोत्रावली

( १ )

[2]यत्र यत्र मिलिता मरीचयः
तत्र तत्र विभुरेव जृम्भते ।

———

## स्वच्छन्दः

( १ )

[3]रसवह्निसमायोगात् ताम्रं कालिकया युतम् । २३३५
विशोधितं तु तत्त्वज्ञैर्हेमत्वं प्रतिपद्यते ॥
न भूयस्ताम्रतां याति तथात्मा तु कथञ्चन ।
गुरुणा तन्त्रविदुषा यस्माद् वै निर्मलः कृतः ॥
न भूयो मलतां याति शिवत्वं याति निर्मलः ।

( २ )

[4]अन्यशास्त्ररतो यस्तु नासौ सिद्धिफलप्रदः । २३४०

---

१. म० म०, प० पृ० ७३

२. यो० दी०, पृ० २९३

३. श० र० सं०, पृ० ८०

४. त० आ० १३ । ३०७; पृ० १८४

## स्वच्छन्दभैरवः

[1]तज्ज्ञानमीश्वरे दत्तमीश्वरेण शिवेच्छया ।
विद्यायामादितो दत्तं विद्येशाय च तत्त्वतः ॥
विद्येश्वरेण तद्दत्तं ज्ञानं नियमिकं क्रमात् ।
दत्तं रुद्रेभ्य एतच्च गुणतत्त्वेश्वराय च ॥
श्रीकण्ठायेश्वरेणैव दत्तं तेन ततः परम् । २३४५
श्रीकण्ठेन प्रधानादिदशरुद्रान्तिकं क्रमात् ॥
दीक्षयित्वा विधानेन दत्तं वै ज्ञानमम्बिके ।
दीक्षयित्वाऽभिषिच्याथ श्रीकण्ठेन मयाऽपि च ॥
दत्तं श्रीदक्षिणं सर्वं सर्वकामार्थसाधनम् ।

## स्वच्छन्दसंग्रहः

(१)

[2]अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतम् । २३५०
रक्तं श्वेतं च साहस्रदलस्थं शक्तिभिर्युतम् ॥
ऊर्ध्वाधोमुखमीशानि कर्णिकाकेसरान्वितम् ।
शक्तिरूपं महादेवि कुलाकुलमयं शुभम् ॥
पङ्कजद्वयमीशानि स्थितं शाश्वतमव्ययम् ।
तयोर्मध्ये सुषुम्नान्तस्त्रिंशदाधारपङ्कजम् ॥ २३५५
शक्तिरूपं शिवाकारं शर्वाण्यासीन्निजालयम् ।
तेषां रूपं क्रियां चैव क्रमाद्वक्ष्येऽधुना शृणु ॥

---

१. यो० दी०, पृ० १५२
२. यो० दी०, पृ० ३८–३९

गुदमेढ्रान्तरं देवि पञ्चाङ्गुलसमुच्छ्रितम् ।
कन्दमेकाङ्गुलं मध्ये द्व्याङ्गुलविसारणम् ॥
तस्य मध्ये महायोनिस्त्रिकोणाकाररूपिणी । २३६०
सुषुम्ना योनिमध्यस्था तस्या मूले महेश्वरि ॥
अधःपद्मं सहस्रारं कर्णिकाकेसरान्वितम् ।
तैजसं रत्नसन्दीप्तं तद्दलस्थितशक्तिभिः ॥
प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिः संवृतं प्रिये ।
कर्णिकामध्यतो देवि कुलदेवी च संस्थिता ॥ २३६५
तत्पद्मोर्ध्वं सुषुम्नाया मध्ये त्वेकाङ्गुलोपरि ।
पद्ममष्टदलैर्युक्तम् अष्टग्रन्थिसमन्वितम् ॥
रक्तं सुकर्णिकोपेतं रक्तकिञ्जल्कशोभितम् ।
ग्रन्थ्यग्रस्थत्रिशृङ्गं च ब्रह्माण्याद्यष्टभैरवैः ॥
अष्टपत्रस्थितं ग्रन्थिस्थितं वामादिशक्तिभिः । २३७०
तदन्यशक्तिभिश्चैव शृङ्गस्थाभिः समावृतम् ॥
तन्मध्ये कौलशक्त्या च सेवितं च स्मरेत्ततः ।
एकाङ्गुलप्रमाणोर्ध्वे षड्दलं कुलपङ्कजम् ॥

( २ )

[1]आधारपङ्कजं पीतं चतुष्पत्रं सुकेसरम् ।
अधोमुखं च तन्मध्ये कुण्डली परमेश्वरि ॥ २३७५
स्वयम्भुमध्यगा चिन्त्या वरदादिभिरावृता ।
पार्थिवं पङ्कजं ह्येतत् तस्योर्ध्वं पञ्चपङ्कजम् ॥
तैजसं परमेशानि तन्मध्यस्थितशक्तयः ।
निष्कलाः परमेशानि विद्युत्पुञ्जनिभाः स्मरेत् ॥
तदूर्ध्वे कर्णिकामध्ये वह्निबिम्बं तदूर्ध्वगम् । २३८०
पूर्णपीठं च तन्मध्ये शाकिनी संस्थिता शिवे ॥

---

१. यो० दी०, पृ० ३९

( ३ )

[1]आधारपङ्कजस्योर्ध्वे सार्धद्व्यङ्गुलिकोपरि ।
तैजसं साष्टपत्रं च पीतकर्णिकया युतम् ॥
हृल्लेखाकर्णिकामध्ये स्थितानङ्गादिदेवता ।
एतस्माद् द्व्यङ्गुलादूर्ध्वे स्वाधिष्ठानं षडस्रकम् ॥ २३८५
आप्यश्च बन्दिनीशक्तिपूर्वाभिः शक्तिभिर्वृताम् ।
काकिनीमभिसश्रित्य.......................... ॥

( ४ )

[2]..........................नाभिस्त्र्यर्धाङ्गुलोपरि ॥
तत्पद्मं मणिपूरं च दशपत्रं सुशोभनन् ।
लाकिनीमध्यगं तच्च डामर्यादिभिरावृतम् ॥ २३९०
चतुर्दशाङ्गुलादूर्ध्वे मणिपूराज्यपङ्कजात् ।
पङ्कजं राकिनीमध्यं द्वादशारमनाहतम् ॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम् ।
तत्रस्थसूर्यबिम्बं तु नादोद्यानाख्यपीठकम् ॥
तस्मादेकाङ्गुलादूर्ध्वे विशुद्धं षोडशारकम् । २३९५
मध्यगा डाकिनी बाह्यपत्रेषु परमेश्वरी ॥
अमृताद्यक्षरान्ताश्च चन्द्रबिम्बं तदूर्ध्वगम् ।
कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुले ॥
तस्यामष्टदलं पद्मं रसिकादिभिरावृतम् ।
आज्ञाधारं द्विपत्राब्जं हक्षद्विदलसंयुतम् ॥ २४००
हंसवतीक्षमापार्श्वं तयोर्मध्ये तु हाकिनी ।

१. यो० दी०, पृ० ४०
२. यो० दी०, पृ० ४०

( ५ )

[१] ............................बिन्द्वावरणमूर्ध्वतः ॥
सूर्यकोटिप्रतीकाशमतिदीप्तं महद्गुणम् ।
तन्मध्ये शतकोटीनां संख्यायोजनपङ्कजम् ॥
तत्कर्णिकायामासीनः शान्त्यतीशेश्वरः प्रभुः । २४०५
पञ्चवक्त्रो दशभुजो विद्युत्पुञ्जनिभाकृतिः ॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनुक्रमात् ।
परिवार्य स्थिताश्चैताः शान्त्यतीतस्य सुन्दरि ॥
वामभागे समासीना शान्त्यतीता मनोन्मनी ।
पञ्चवक्त्रधराः सर्वा दशबाह्विन्दुशेखराः ॥ २४१०
बिन्दुतत्त्वं समाख्यातं कोट्यर्बुदशतैर्वृतम् ।

( ६ )

[२]अर्धचन्द्रस्तदूर्ध्वे तु रोधिनी तस्य चोपरि ।
ज्योत्स्ना ज्योत्स्नावती कान्तिः सुप्रभा विमलापि च ॥
अर्धचन्द्रस्थिता ह्येताः कलाः पञ्च प्रकीर्तिताः ।
रुन्धिनी रोधिनी रोद्धा ज्ञानरोधा तमोपहा ॥ २४१५
निरोधिकाः कलाः पञ्च कथितास्तव सुन्दरि ।
ब्रह्मादिपरमेशानां परमाप्तिनिरोधनात् ॥
निरोधिकेति सा प्रोक्ता तस्या भेदा वरानने ।
परसादाख्यसंप्राप्तिः.............................. ॥

( ७ )

[३]रोधिन्याख्यं यदुक्तं ते नादस्योर्ध्वसंस्थितः । २४२०
पद्मकिञ्जल्कसंकाशः कोटिसूर्यसमप्रभः ॥

---

१. यो० दी०, पृ० ४४–४५
२. यो० दी, पृ० ४५
३. यो० दी०, पृ० ४८

पुरैः परिवृतोऽसंख्यैर्मध्ये पञ्चकलावृतः ।
इन्धिका दीपिका चैव रेचिका मोचिका तथा ॥
ऊर्ध्वगा मध्यगा तासां पञ्चमी परमा कला ।
चन्द्रकोटिसमप्रख्यं तन्मध्येऽर्बुदयोजनम् ॥ २४२५
पद्ममध्ये समासीनमीश्वरं चोर्ध्वगामिनम् ।
चन्द्रायुतप्रतीकाशं पञ्चवक्त्रं त्रिलोचनम् ॥
इन्धिकाद्यैर्वृतं देवं शूलपाणिं जटाधरम् ।
तस्योत्सङ्गगतामूर्ध्वगामिनीं परमां शिवाम् ॥
ध्यायेत् ........................ । २४३०

(८)

[1]नाड्याधारस्तु नादान्तो भित्त्वा सर्वमिदं जगत् ।
अधःशक्त्या विनिर्भिद्य ऊर्ध्वशक्त्यवसानकः ॥
नाड्यां ब्रह्मबिले लीनस्त्वव्यक्तध्वनिलक्षणः ।
अतो ब्रह्मबिलं ज्ञेयं रुद्रकोट्यर्बुदैर्वृतम् ॥
तत्र ब्रह्मशिवो ज्ञेयः शशाङ्कशतसन्निभः । २४३५
दशबाहुस्त्रिनेत्रश्च पञ्चवक्त्रेन्दुशेखरः ॥
ब्रह्माणी त्वं परा शक्तिर्ब्रह्मणोत्सङ्गगामिनी ।
द्वारं या मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ॥

(९)

[2]शक्तितत्त्वं समाख्यातं भुवनैरावृतं महत् ।
आधारं भुवनानां च प्रवक्ष्यामि समासतः ॥ २४४०
सूक्ष्मा चैव सुसूक्ष्मा च तथा चैवामृता तथा ।
चतुर्दिक्षु स्थितास्तासां मध्यस्था व्यापिनी स्थिता ॥
पञ्चवक्त्रा त्रिनेत्रा च सुतेजस्का च पञ्चमी ।
शक्तितत्त्वं समाख्यातं ध्यानान्मुक्तिफलप्रदम् ॥

---

१. यो० दी०, पृ० ४९
२. यो० दी०, पृ० ४९

( १० )

[1]चिदानन्दस्वरूपा तु परा शक्तिस्तदूर्ध्वतः। २४४५
समना नाम सा शक्तिः सर्वकारणकारणा ॥
सर्वाण्डानि बिभर्तीयं शिवेन समधिष्ठिता।
प्रत्यारूढः स भगवान् शिवः परमकारणः ॥
सृष्टिं स्थितिं च संहारं तिरोभावमनुग्रहम्।
शिवः करोति सततं सर्वकारणकारणः ॥ २४५०
शिवः सर्वस्य कर्तेयं शक्तिः कारणमिष्यते।

( ११ )

[2]या शक्तिः कारणत्वेन तदूर्ध्वे उन्मना स्मृता।
मनः संक्रमते यत्र तेन सा उन्मना स्मृता ॥
नात्र कालकलाभावो न तत्त्वं न च देवता।
सुनिर्वाणं परं शुद्धं रुद्रवक्त्रं तदुच्यते ॥ २४५५
शिवशक्तिरिति ख्याता निर्विकल्पा निरञ्जना।

( १२ )

[3]तत्त्वातीतं वरारोहे वाङ्मनोतीतगोचरम्।
अनिष्कलं चासकलं नीरूपं निर्विकल्पकम् ॥
निर्द्वन्द्वं परमं तत्त्वं शिवाख्यं परमं पदम् ॥

( १३ )

[4]नयित्वा तं सुषुम्णाधः कन्दमूले च मारुतम्। २४६०
इच्छाज्ञानक्रियारूपां कुण्डलीं परमेश्वरीम् ॥

१. यो० दी०, पृ० ५०–५१
२. यो० दी०, पृ० ५१
३. यो० दी०, पृ० ५२
४. यो० दी०, पृ० ५९

प्रसुप्तभुजगाकारां मातृकारूपिणीं शिवाम् ।
पिण्डं कुण्डलिनी शक्तिः पदं हंस प्रकीर्तितः ॥
रूपं बिन्दुरिति ख्यातं रूपातीतं च चिन्मयम् ।

( १४ )

[1]शिवाभिन्ना परा शक्तिः सर्वकर्मशरीरिणी । २४६५

( १५ )

[2]चितिश्चैत्यं च चैतन्यं चेतनाद्वयकर्म च ।
जीवः कला च देवेशि सूक्ष्मं पुर्यष्टकं मतम् ॥

( १६ )

[3]पशवस्त्रिप्रकाराः स्युस्तेष्वेके सकला मताः ।
प्रलयाकलनामानस्तेषां केचिन्महेश्वरी ॥
विज्ञानकेवलास्त्वन्ये तेषां रूपं क्रमाच्छृणु । २४७०
अनादिमलसम्पन्नो मायाकर्मावृतो विभुः ॥
शरीरी शिवतत्त्वाज्ञो भेदैकरसिको लघुः ।
सर्वदा कर्मकर्ता च स्वकर्मफलयोजकः ॥
नित्यं विषयसंसक्तो बोध्यः शोध्यः पुमानयम् ।
मलमात्रेण सम्बद्धः पशुर्विज्ञानकेवलः ॥ २४७५
सुपक्वमलविज्ञानकेवलश्च स्वयं प्रिये ।
सुतीव्रशक्तिपातेन कुरुते तान् स केवलान् ॥
मिश्राः प्रमातृरूपाः स्युः प्रलयाकलसंज्ञकाः ।
पुर्यष्टकशरीराश्च स्वस्वकर्मवशात् प्रिये ॥
सर्वयोनिषु सम्भूय भोगार्थं स्वस्वकर्मणाम् । २४८०
भुक्त्वा भोगानि तेषां तु कर्मसाम्ये शिवः स्वयम् ॥

१. यो० दी०, पृ० ६४
२. यो० दी०, पृ० ६८ ९८४, ३०२
३. यो० दी०, पृ० १४१

सुपक्वमलकर्माणस्तान् केचिदनुगृह्य च ।
जलतत्त्वादितत्त्वानां मध्ये लोकेश्वरास्त्रिधा ॥

( १७ )

[1]अनादिमलसंच्छन्नो मायाकर्मावृतो विभुः ।
शरीरी शिवतत्त्वाज्ञो भेदैकरसिको लघुः ॥ २४८५

( १८ )

[2]पुरुषादिकमायान्तं तेजस्तत्त्वं महेश्वरि ।

( १९ )

[3]विद्या चेश्वरसादाख्यौ वायुतत्त्वं समीरितम् ।
यत्सदाशिवपर्यन्तं विनाशोत्पत्तिसंयुतम् ॥

( २० )

[4]तां भित्त्वा तु वरारोहे ऊर्ध्वशक्तिं परां शिवाम् ।
शक्तितत्त्वात्मिकां देवीं प्रसुप्तभुजगाकृतिम् । २४९०
शक्तितत्त्वं समाख्यातं भुवनैराश्रितं महत् ॥

( २१ )

[5]शक्तितत्त्वं समाख्यातं शिवतत्त्वं तदूर्ध्वतः ।
शक्तितत्त्वं शिवो व्योम.................. ॥

---

१. यो० दी०, पृ० १४४
२. यो० दी०, पृ० १४९
३. यो० दी०, पृ० १४९
४. यो० दी०, पृ० १४९–१५०
५. यो० दी०, पृ० १५०

( २२ )

[1]सर्वविद्याविदाचार्यो मोक्षधर्मपरायणः ।
गुरुवक्त्रप्रयोगेण पशुं तत्रैव योजयेत् ॥ २४९५

( २३ )

[2]मलादीनामपाके तु सामान्यानुग्रहो भवेत् ।
आधिकारिकमैश्वर्यं शिवानुग्रहमात्रतः ॥
पशवस्त्रिप्रकारास्तु प्राप्नुयुः परमेश्वरि ।
ये पक्वमलकर्माणस्तान् किञ्चिदनुगृह्य च ॥
जलतत्त्वादितत्त्वानां मध्ये लोकेश्वरास्त्रिधा । २५००

( २४ )

[3]एभिर्मायादिभिः षड्भिः परिपूर्णः पशुः पुमान् ।
भुङ्क्ते भोगान् यथा देवि तथा पुरुषसंज्ञकः ॥
सैव मायाऽथ भोगार्थं पशोरव्यक्तसंज्ञकम् ।
मूलप्रकृति विश्वस्य गुणत्रितयरूपकम् ॥
अभूत् तस्यां प्रकृत्यां तु गुणतत्त्वं बभूव ह । २५०५
तद्दुःखसुखमोहानां मूलं सत्त्वं रजस्तमः ॥
बुद्धिव्यापारनिचयरूपं व्यक्तगुणात्मकम् ।
विषयात्मा तु बुद्धिः स्याद् गुणास्तत्र प्रयोजकाः ॥
गुणत्रयानुसारेण . त्रिधा कर्मानुसारतः ।
तया बुद्ध्या समुद्भूतोऽहङ्कारस्त्रिप्रकारकः ॥ २५१०
सर्वजीवनसंरम्भरूपेण कमलासने ।
विषयास्तस्य भेदाश्च त्रिधा कर्मानुसारतः ॥
सोऽयं तैजसवैकारिभौतिकाख्यस्वरूपतः ।

---

१. यो० दी०, पृ० १५५
२. यो० दी०, पृ० १५९
३. यो० दी०, पृ० १६५-१६७

विकाराश्च स्वभेदाश्च वागादीन्द्रियसंहृतौ[1] ॥
वाचिकाद्याः स्युरेतानि तत्र तत्र नियन्तृभिः । २५१५
प्राप्नोति सात्त्विकाद्याभिरवस्थाभिरगात्मजे ॥
संकल्पकारकं चेच्छारूपं तैजसतो मनः ।
जातं वैकार्यवस्थाभिर्ज्ञानकर्मेन्द्रियाणि च ॥
भूततन्मात्रशब्दस्पर्शरूपरसगन्धकाः ।
जाता वागादीन्द्रियाणां व्यापाराः परमेश्वरि ॥ २५२०
श्रोत्रत्वक्चक्षुरसनाघ्राणान्येतानि पञ्च च ।
बुद्धीन्द्रियाणि व्यापारास्तेषामेकैकशः क्रमात् ॥
शब्दस्पर्शरूपरसगन्धानां ग्रहणं प्रिये ।
कर्मेन्द्रियाणि वाक्पाणिपादपायुरुपस्थकाः ॥
वचनादानगमनविसर्गानन्दकं क्रमात् । २५२५
कर्मेन्द्रियाणां व्यापाराः पञ्चानां परिकीर्तिताः ॥
एतानि दश बाह्यानि क्रमेणाभ्यन्तरत्रयम् ।
मनो बुद्धिरहङ्कारो ह्यन्तःकरणसंज्ञकम् ॥

( २५ )

[1]सर्ववाङ्मयमूला या वर्गाष्टकसमावृता ।
विश्वोत्पत्तिक्रमान्ताष्टशक्तिप्रसूतभैरवैः ॥ २५३०
शक्तिभिश्च समायुक्ता अक्षान्ता मातृकावलिः ।

( २६ )

[2]ललाटोर्ध्वे समारभ्य कपालोर्ध्वावसानकम् ।
त्र्यङ्गुलोर्ध्वे शिरोदेशे परं व्योम प्रकीर्तितम् ॥

---

१. यो० दी०, पृ० १६७
२. यो० दी०, पृ० १७३

( २७ )

[1]षोडशान्तमिति ख्यातं व्योमस्थानेन्दुमण्डलम् ।
तदधःस्थानगं सूर्यबिम्बं द्वादशशक्तिकम् ॥ २५३५
द्वादशान्तमिति ख्यातं स्थितं व्योमप्रदेशकम् ।
इति तेन बिन्दुतत्त्वं चतुष्पत्राम्बुजं च तत् ॥
सूर्यबिम्बमधश्चोर्ध्वं सार्धैकाङ्गुलिदेशतः ।

( २८ )

[2]धरादिमायान्तमात्मतत्त्वमन्तर्गतं स्मृतम् ।
शुद्धविद्येश्वरसदाशिवविद्याख्यतत्त्वगाः ॥ २५४०
शिवशक्तिद्वयं चैव शिवतत्त्वं प्रकीर्तितम् ।
प्रमातृमेयप्रभृतिरूपमेतत् त्रयात्मकम् ॥
एतत्तत्त्वं शिवतत्त्वं सर्वतत्त्वमयं शुभम् ।

( २९ )

[3]यादिक्षान्तात्मवर्णानि कला वह्नेर्महेश्वरि ।
एताः कलाः समभ्यर्च्य स्वस्ववर्णैर्यथाविधि ॥ २५४५
स्वबीजाद्याश्चतुर्थ्यन्तनाममध्या नमोऽन्तिकाः ।
प्रोक्ता वह्निकला मन्त्रनामानि शृणु साम्प्रतम् ॥
धूम्रार्चिर्नीललक्ता च कपिला विस्फुलिङ्गिनी ।

( ३० )

[4]अस्त्रप्रक्षालितं शङ्खं स्थापयित्वा तथोपरि ।
हृदयात् सूर्यबिम्बं च समावाह्य स्वमन्त्रतः ॥ २५५०

---

१. यो० दी०, पृ० २१८
२. यो० दी०, पृ० २४२
३. यो० दी०, पृ० २५५
४. यो० दी०, पृ० २५५

कादिठान्तं भादिडान्तं वर्णजातं क्रमोऽक्रमात् ।
द्वयं द्वयं प्रयोक्तव्यं कलाश्च तदनन्तरम् ॥

( ३१ )

[1]कादिठान्ताक्षरा देवि मूर्तिनाम्ना समीरिताः ।
तपिनी तापिनी चैव शोधनी शोषणी तथा ॥
भ्रामणी क्लेदिनी चैव वरेण्या कर्षणी तथा । २५५५
सुषुम्ना वृष्टिवाहा च ज्येष्ठा चैव हिरण्यदा ॥
एताः सौरकलाश्चैव व्युत्क्रमाद् भादिडान्तिमाः ।

( ३२ )

[2]एलालवङ्गकङ्कोलजातीफलसुसंयुतान् ।
सुगन्धिकुसुमैर्द्रव्यैः सह तस्मिन् जले क्षिपेत् ॥
नवयोनिं समालिख्य पूर्ववज्जलमध्यतः । २५६०
विशुद्धितः समावाह्य चन्द्रमण्डलमर्चयेत् ॥

( ३३ )

[3]आदिकाद्यान्तिकाः सौम्याः कलाः षोडश कीर्तिताः ।
तासां नामानि वक्ष्यामि शृणु सर्वाङ्गसुन्दरि ॥
अमृता मानदा पूषा पुष्टिः प्रीतिर्महेश्वरि ।
रेवती ह्रीमती चैव श्रीकान्तिश्च सुधा ततः ॥ २५६५
ज्योत्स्ना हैमवती चैव छाया सम्पूरिता तथा ।
रामा श्यामा कलानां च नामान्येतानि वल्लभे ॥
अमृतेशीं च तन्मध्ये भावयेच्च नवात्मना ।
लकुलेशं समुद्धृत्य भृगुं संवर्तकं तथा ॥
पिनाकिनं च खड्गीशं भुजङ्गं यावनं तथा । २५७०

१. यो० दी०, पृ० २५६
२. यो० दी०, पृ० २५६
३. यो० दी०, पृ० २५६-२५७

योजयित्वा क्रमेणैव कार्यकारणमस्तकम् ॥
अर्घीशं योजयेदन्ते नवात्मायं समुद्धृतः ।

( ३४ )

[1]स्थूलं पञ्चाशदाकारं सूक्ष्ममष्टाष्टकं स्मृतम् ।

( ३५ )

[2]ब्रह्मरन्ध्रे ध्रुवादूर्ध्वे कुलपद्मं महेश्वरि ।
श्वेतं सुकेशरोपेतं सहस्रारमधोमुखम् ॥ २५७५
व्यापिनी केवला शक्तिरमृतौघप्रवर्षिणी ।

( ३६ )

[3]आधारं स्वाधिष्ठानं च मणिपूरमनाहतम् ।
मध्यमं वज्रकण्ठं च लम्बिकां च विशुद्धिकाम् ॥
आज्ञां च नवकं विद्धि षट्चक्राणि त्रिहीनकम् ।

( ३७ )

[4]आदौ पादावरेण्याख्यां संयुजेन्नलरक्रमे । २५८०

( ३८ )

[5]आधारं हृदयं बिन्दुस्थानं च परिकीर्तितम् ।

( ३९ )

[6]नात्र कालकलाभावम्....................... ।

---

१. यो० दी०, पृ० २८४
२. यो० दी०, पृ० २९०
३. यो० दी०, पृ० २९५
४. यो० दी०, पृ० ३०७
५. यो० दी०, पृ० ३१५
६. यो० दी०, पृ० ३३०

( ४० )

[1]गुरुभक्तिश्च शान्तिश्च पूजा श्रद्धा क्षमा धृतिः ।

( ४१ )

[2]नित्यं सम्पूजयेद् देवीं सासनां सावृतिं क्रमात् ।

( ४२ )

[3]अविदित्वा कुलाचारं कुलं कौलिकदर्शनम् । २५८५

( ४३ )

[4]अमृता प्रथमा देवी द्वितीया कर्षिणी मता ।
इन्द्राणी तु तृतीया स्यादीशानी तु चतुर्थिका ॥
पञ्चमी स्यादुमा देवी षष्ठी चैवोर्ध्वकेशिनी ।
सप्तमी ऋद्धिदा प्रोक्ता ऋक्षा चाष्टमिका मता ॥
लृका नवमिका प्रोक्ता लृषा स्याद्दशमी मता । २५९०
एकादशी यथा चैकपादा द्वादशिका शिवे ॥
ऐश्वर्याभिरता पश्चादोङ्कारी तु त्रयोदशी ।
चतुर्दशी चौषधात्मा पञ्चाधिकदशाम्बिका ॥
षोडशी त्वक्षरा देवी प्रोक्ताः षोडश शक्तयः ।
कालरात्रिश्च खातीता गायत्री च ततः परम् ॥ २५९५
घण्टाधारी च ङार्णात्मा चण्डा छाया जयापि च ।
झङ्कारी ज्ञानरूपा च टङ्कहस्ता ततः परम् ॥
ठङ्कारी द्वादश ह्येता द्वादशारे समर्चयेत् ।
डाकिनी चैव ढङ्कारी णामिनी तामसी तथा ॥

---

१. यो० दी०, पृ० ३३३
२. यो० दी०, पृ० ३३५
३. यो० दी०, पृ० ३३७
४. यो० दी०, पृ० २०७

स्थाण्वी दाक्षायणी चैव धात्री नन्दा च पार्वति । २६००
फट्कारी दशपत्रेषु पूर्वादीशान्तिकं यजेत् ॥
बन्धिनीं भद्रकालीं च महामायां यशस्विनीम् ।
रक्तां लम्बोष्ठिकां चैव पूजयेत् क्रमशः प्रिये ॥
चतुष्पत्रे च देवेशि वरदां च श्रियं तथा ।
षण्ढां सरस्वतीं चैव पूजयेत् क्रमशः शिवे ॥ २६०५
क्षमां हासवतीं चैव पूजयेच्च द्विपत्रयोः ।
एताभिः शक्तिभिर्युक्ता ध्यातव्याश्च सुरेश्वरि ॥

## स्वतन्त्रतन्त्रम्

( १ )

[1]याऽथ कुण्डलिनी शक्तिर्मायाकर्मानुसारिणी ।
नादबिन्द्वादिकं कार्यं तस्या इति जगत्स्थितिः ॥

( २ )

[2]तत्र कुण्डलिनी शक्तिर्मायाकर्मानुसारिणी । २६१०
भुवनाधिपतीनां च हेतुस्तद्वासिनां प्रिये ॥
तदतीतं वरारोहे परं तत्त्वं निरामयम् ।

( ३ )

[3]हृत्प्राणेनाहं सदाहा वह्निस्वैर्ललितेरिता ।
हसाद्ययाद्ययाद्यः स्यादादिमध्यस्तहंसया ॥
तृतीयाप्रकृतिः सैव तुर्या तैरन्त्यमायया ॥ २६१५

---

१. श० र० सं०, पृ० ४१
२. श० र० सं०, पृ० ४४
३. सौ० ल० सौभा०, श्लो० ३२

## स्वबोधोदयमञ्जरी

( १ )

[1]यद्यन्मनोहरं किञ्चिदक्षिगोचरमागतम् ।
एकाग्रं भावयेत् तावद् यावल्लीनं निरोधकृत् ॥

## स्वस्वभावसंबोधनम्

( १ )

[2]बन्धनं बन्धकृद् बध्यस्त्रिष्वप्येको न भिद्यते ।
स्वविकल्पकृतैर्बन्धैर्बध्यते त्वनिशं जगत् ॥

## स्वात्मसंबोधः

( २ )

[3]यथाऽग्निपोत्रं ज्वलनोद्धृतं स- २६२०
च्छैत्यं प्रयायाच्छनकैर्न सद्यः ।
अज्ञानपङ्केऽपि तथा निरस्ते
कालेन कैवल्यमुपैति देही ॥

---

१. स्प० प्र०, पृ० ५१
२. स्प० प्र०, पृ० ८
३. स्प० प्र०, पृ० २१

# स्वायंभुवागमः

(१)

[1]यत्र शुद्धिर्न पुंसेऽस्ति सक्तिर्भोगेषु किं कृता ।

(२)

[2]अप्रमेयमनिर्देश्यमनौपम्यमनामयम् । २६२५
सूक्ष्मं सर्वगतं नित्यं ध्रुवमव्ययमीश्वरम् ॥
अप्रमेयमनन्तत्वादनिर्देश्यमलक्ष्यतः ।
अनौपम्यमसादृश्याद् विमलत्वादनामयम् ॥
सूक्ष्मं चानुपलभ्यत्वाद् व्यापकत्वाच्च सर्वगम् ।
नित्यं कारणशून्यत्वादचलत्वाच्च तद् ध्रुवम् ॥ २६३०
ओङ्कारात्मतया भाति शान्त्यतीतः परः शिवः ॥

(३)

[3]शिवं प्रणम्य परमं निधनेशमतः परम् ।
ज्ञानदीक्षे प्रवक्ष्यामि ते शृणुध्वं समाहिताः ॥

(४)

[4]अथाऽऽत्ममलमायाख्यकर्मबन्धविमुक्तये ।
व्यक्तये च शिवत्वस्य शिवाज्ज्ञानं प्रवर्तते ॥ २६३५

(५)

[5]तदेकमप्यनेकत्वं शिववक्त्राम्बुजोद्भवम् ।
परापरेण भेदेन गच्छत्यर्थप्रतिश्रयात् ॥

---

१. भो० टी०, श्लो० ३
२. श० र० सं०, पृ० २
३. श० र० सं०, पृ० २
४. श० र० सं०, पृ० ४
५. श० र० सं०, पृ० ९

( ६ )

[1]चिन्तामणिरिवात्राऽसौ स्थितः सर्वस्य कारणम् ।
एकमेव शिवज्ञानं विभिन्नं दशधा पुनः ॥
तथाऽष्टादशधा भिन्नं भेदान्तरविसर्पितम् । २६४०

( ७ )

[2]एवमाख्यमिदं कृत्यं किंकारणमुदाहृतम् ।
पशूनां देहसंयोगो भोगमोक्षाय कथ्यते ॥
तथापि सह चेत्याहुरनादिमलमोचकः ।

( ८ )

[3]अथाऽनादिमलः पुंसां पशुत्वं परिकीर्तितम् ।
तुषकम्बुकवद् ज्ञेयं मायावापाङ्कुरस्य तत् ॥ २६४५

( ९ )

[4]तथो(यो)द्दलितसामर्थ्याः सर्वस्य प्रभविष्णवः ।
अनन्तेशादिविद्येशा बभूवुः कारणेच्छया ॥
तेभ्योऽमितबलाश्चान्ये तेभ्यश्चान्ये नियोगिनः ।
भवन्ति विमलात्मानः सितासितफलप्रदाः ॥
तेभ्योऽपि साञ्जनाश्चान्ये पतीच्छानुविधायिनः । २६५०
येभ्यो निखिलमुत्पन्नं जगत् स्थावरजङ्गमम् ॥

( १० )

[5]अथात्माऽविमलो बद्धः पुनर्मुक्तश्च दीक्षया ।
विज्ञेयः स त्रिधावस्थः केवलः सकलोऽमलः ॥

---

१. श० र० सं०, पृ० १०
२. श० र० सं०, पृ० २९
३. श० र० सं०, पृ० ३६
४. श० र० सं०, पृ० ५१
५. श० र० सं०, पृ० ५८

(११)

[1]क्षीणे तस्मिन् धिया सा स्यात् परं निःश्रेयसं प्रति।

(१२)

[2]स देशिकमनुप्राप्य दीक्षाविच्छिन्नबन्धनः। २६५५
प्रयाति शिवसायुज्यं निर्मलो निरुपप्लवः॥

(१३)

[3]मायेयमाणवं कर्म चैतावदणुबन्धनम्।
एतच्चोक्तं मया सर्वं संसारात्मककाण्डजम्॥

(१४)

[4]पाशज्ञानान्न मुक्तिः स्यात् पशुज्ञानात् तथैव च।
सर्वतश्च यतो मुक्तिः पतिज्ञानेन गद्यते॥ २६६०

(१५)

[5]अस्मात् प्रविततादु बन्धात् परसंस्थानिरोधकात्।
दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि॥

(१६)

[6]अनेन क्रमयोगेन परां केवलतां गतः।
अनाद्यशुद्धिशून्यत्वात् प्राप्नोति न भवान्तरम्॥

---

१. श० र० सं०, पृ० ६६
२. श० र० सं०, पृ० ६८
३. श० र० सं०, पृ० ७६
४. श० र० सं०, पृ० ७६
५. श० र० सं०, पृ० ७६
६. श० र० सं०, पृ० ८१

( १७ )

[1]भवोद्भवपदातीतो निष्कम्पार्चिरिव स्थितः । २६६५
मुक्तो व्यक्तशिवत्वोऽसौ कृतकृत्यो यतस्ततः ॥

( १८ )

[2]दग्धसंसारबीजस्य या पुंसः पश्चिमार्थतः ।
सा गतिस्तस्य विज्ञेया न देशान्तरसंस्थितिः ॥
पूर्वावस्थान्तरव्यक्तौ सत्यां लोके गतं यथा ।
प्रोच्यते पटवर्णादि वस्तु तद्वत् पुमानपि ॥ २६७०

( १९ )

[3]शिवधामार्पितस्याऽस्य भोगभोक्तुर्न जातुचित् ।
भोक्तृत्वमधिकारित्वं पतिकृत्यानुकारिता ॥

## हंसपारमेश्वरम्

( १ )

[4]शिवो हकार इत्युक्तः सकारः शक्तिरव्यया ॥

( २ )

[5]पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः ।
सौषुम्णेऽध्वन्युच्चरिताः पतित्वं प्राप्नुवन्ति ते ॥ २६७५

१. श० र० सं०, पृ० ८५
२. श० र० सं०, पृ० ८८
३. श० र० सं०, पृ० ८९
४. यो० दी०, पृ० १५८
५. स्प० प्र०, पृ० ३३

# हंसभेदः

( १ )

[1]सेव्यन्ते गुरवोऽनेके ज्ञानविज्ञानभासुराः ।
दुर्लभोऽयं गुरुर्देवि योऽहङ्कारक्षयङ्करः ॥
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनाहङ्कारनिर्मुक्तः केवलो विदितः स्वयम् ॥

( २ )

[2]बुद्धिप्राणशरीराख्ये यदेतस्मिन् पुरत्रये । २६८०
अहङ्काराद् वसत्यात्मा तेनायं पुरुषः स्मृतः ॥
एतत् पुरत्रयं दग्धं येन स त्रिपुरान्तकः ।
स एव पुरुषः प्रोक्तः स्मरारिरपि स स्मृतः ॥

( ३ )

[3]अहं प्राणो मनश्चाहमहङ्कारोऽप्यहं मतः ।
अहं बुद्धिरहं शक्तिरहं स भगवान् शिवः ॥ २६८५
किं वा बहुप्रलापेन जगत्यस्मिंश्चराचरे ।
योऽर्थः प्रमाणोपारूढः सोऽहं सर्वात्मकः स्थितः ॥

---

१. म० म० प०, पृ० ६
२. म० म० प०, पृ० ५७
३. म० म० प०, पृ० १३९

# हस्तनयः

(१)

[1]सदसद्विभेदसूते-
दलनपरा कापि सहजसंवित्तिः ।
उदिता त्वमेव भगवति २६९०
जयसि जयाद्येन रूपेण ॥

---

१. त० आ० वि०, ४ । १७३; पृ० २००

# लुप्तागमसंग्रह-श्लोकार्धानुक्रमणी

# संकेतसूची

| | |
|---|---|
| १—तन्त्र० अभि० | तन्त्रसारः, अभिनवगुप्तकृतः |
| २—त० आ० | तन्त्रालोकः |
| ३—त० आ० वि० | तन्त्रालोकविवेकः |
| ४—परा० अभि० | परात्रीशिकाविवृतिः, अभिनवगुप्तकृता |
| ५—प्र० हृ० | प्रत्यभिज्ञाहृदयम् |
| ६—भो० टी० | भोगकारिकाटीका |
| ७—म० म० | महार्थमञ्जरी |
| ८—म० प० | महार्थमञ्जरीपरिमलः |
| ९—म० म० प० | महार्थमञ्जरीपरिमलः |
| १०—यो० दी० | योगिनीहृदयदीपिका |
| ११—वि० भै० वि० | विज्ञानभैरवविवृतिः |
| १२—श० र० सं० | शतरत्नसंग्रहः |
| १३—शि० वि० | शिवसूत्रविमर्शिनी |
| १४—श्रीत० चि० | श्रीतत्त्वचिन्तामणिः |
| १५—सौ० ल० अरु० | सौन्दर्यलहरीटीका, अरुणामोदिनी |
| १६—सौ० ल० लक्ष्मी० | सौन्दर्यलहरीटीका, लक्ष्मीधरा |
| १७—सौ० ल० सौभा० | सौन्दर्यलहरीटीका, सौभाग्यवर्धिनी |
| १८—स्प० प्र० | स्पन्दप्रदीपिका |